आरक्षोऽस्त्री शिरोमर्म गण्डस्तु करटः कटः ।
[112b]अक्षिकूटमिषीका स्यादिषिका च भवेत्स्त्रियाम् ॥ ९७ ॥
अङ्कुली: कर्णिका कर्णमूलं स्याच्चूलिका स्त्रियाम् ।
गुल्फः प्रौहः स्कन्धदेशस्त्वासनं पद्मकं पुनः ।
बिन्दवः पक्षभागस्तु पार्श्वतोऽप्यथ योऽग्रतः ।
दन्तभागो न ना गात्रं जङ्घादिमावमदेशकः ।
पश्चाद्भागोऽपरो नाङ्गो वारी स्त्री रज्जुरङ्गिणा ।
त्रिपदी गात्रयोर्बन्ध एकस्मिन्नपरेऽपि च ।
उत्पलं कर्णमांसं स्याल्लालिका कर्णवेधिनी ।
अपाङ्गदेशो निर्याणं पुच्छमूलं तु पेचकः ।
शृङ्खलस्त्रिपु चान्दुः स्त्री न स्त्रियौ निगडान्दुकौ ॥ २०० ॥
हिञ्जीरोऽस्त्री पादपाशस्त्रिपदी गात्रबन्धनम् ॥ १ ॥
प्रारब्धिः प्रतिमा हस्तिबन्धो वारीभवन्धभूः ।
आलानं त्वस्त्रियां बन्धस्तम्भोऽथ तलमं भवेत् ॥ २ ॥
क्लीबे करिकराघातस्तोत्रं वैणुकमद्वयोः ।
अङ्कुशोऽस्त्री सृणिर्द्वेद्वेऽपष्ठं त्वग्रं सृणेर्मतम् ॥ ३ ॥
निषादिनां पादकर्म यतं[113a]वीतं तु तद्वयम् ।
दूष्या कक्ष्या वरत्रा स्यात्कण्ठबन्धः कलापकम् ॥ ४ ॥
दन्तावलानां संनाहे गुडा स्त्रीपुंसयोर्मता ।
कल्पना सज्जना चाथ कुमारा गजपालकाः ।
भद्रो मन्दो मृगो मिश्रश्चतस्रो गजजातयः ।
बृंहितं गर्जितं क्लीबे गजस्यान्नं विधा स्त्रियाम् ॥ ५ ॥

---

5983 आरक्षो १; कटः ३
5984 °दिपिका २
5985 कर्णिका २; °चूलिका २
5986 प्रौदहः २ स्कंध ४ देशस्त्वासनं १ पद्मकं १
5987 पार्श्वतोप्य २ यथोग्रतः for post. halt
5988 गात्रे १
5989 °परानाये पादारी १ स्त्री
5990 त्रिपदी १
5991 कर्णवेधिनी ३
5992 निर्याणं १; पुच्छमूले
5994 हिंसीरः पादपाश ६ त्रिपदी १
5995 °बंधो ३ वारिम°
5996 °स्तंभो २
5997 करीस्त्रा°, वैणुक २
5998 °पष्ठं १; °र्मनं १
5999 यतं १ वीतं १ तु तद्द्वयं
6000 वरत्रा ३; कल्पकं १
6002 सजना १; कुमारा १; °लकापाटः (Corrupt)
6003 भद्रो १ मंदो १ मृगो १ मिश्र १ श्च°
6004 विधा १

महामात्रा हस्तिपका हस्त्यारोहा निषादिनः ।
आधोरणाश्च शुण्डाश्च हास्तिकस्त्रिषु हस्तिगः ॥ ६ ॥
नागवारिकनामा स्याद्राजकुञ्जरहस्तिपः ॥ ७ ॥
अर्वा तुरंगस्तुरगस्तुरंगमो
गन्धर्व-वाहाश्व-हयाश्च घोटकः ।
वाजी च सुद्राशन वीति सप्तय-
स्ताक्ष्यों हरि-श्रीसुत सैन्धवा ययीः ॥ ८ ॥
क्रमणकेसरि-केसरि-विक्रमा-
निलरथैकशफा गृहभोजनः ।
कुटच-चामरि-पालक-किण्विनः
परुल-वाडव-हंस-मुहुर्भुजः ।
वडवाश्वा प्रसूर्वामी वाजिनी चार्वती हयी ।
अश्वसन्ती कामुकी सा टारो लघुतुरंग[113b]मः ॥ ९ ॥
हयः किशोरोऽल्पवया जवनस्तु जवाधिकः ।
रथस्य रथ्यो यो वोढा द्विरथ्यो द्विरथीं वहन् ।
युग्यो युगस्यान्यलिङ्गाविष्टो * * * * * * ।
* * * * * * स्थूरं बलं सौरी स कथ्यते ॥ १० ॥
ययुरश्वोऽश्वमेधीयो वीरभद्रश्च संमतः ।
अश्वोरसं वाजिमुख्ये विनीतस्त्रिषु साधुनीः ॥ ११ ॥
आजानेयः कुलीनोऽश्वो वाडवं वडवागणे ।
पुंसश्च-वडवौ द्वंद्वेऽथाश्वपट्केऽश्वपञ्चवम् ।
अश्वीयं त्वश्ववृन्दे स्यादाश्वं चापि नपुंसके ॥ १२ ॥
शूकली दुर्विनीतोऽश्वस्तत्तद्देशास्तु सैन्धवाः ॥ १३ ॥
वनायुजाश्च वानायुजन्मानः पारसीककाः ।
काम्बोजा वाह्लिका हौणा आरट्टास्ताजका अपि ॥ १४ ॥

---

6006 हास्तिक १; हस्तिगः २
6007 °वारिक १
6008 तुरंगस् is repeated
6012 –क्मरिविक्रेमाद
6016 वडवाश्वाप्र°, हयी ७
6017 टारो १
6018 किशोरो १; जवन १ स्तु
6019 रथस्य रथी योवोढा for prior half. द्विरथ्यो १ repeated
6020 After °विष्टो MS. reads लिंग° शेषुष्ठ्यः
6022 वीरभद्र ३
6023 अश्वोरस
6024 कुलीनो २
6025 °वडवौ १; °श्वलह्व पञ्चप्रत्ययः ४
6026 अश्वयं १; °दाश्वं २
6028 °जन्मान. २
6029 कांबोजा १ वाह्लिराः १ हौणा १ आरट्टा १

तौरुष्काः कच्छजा द्वैप्याः पर्वतीयादयोऽपरे ।
कश्यस्त्रिषु कशार्हो योऽविकृतस्तु सुलक्षणः ।
असावविकृतो मार्गे न स्खलेद्वेगवानपि ॥ १५ ॥
हृद्यावर्तचतुष्कं च रो[114a]चमानश्च कण्ठगः ।
तदा श्रीवत्सकी सोऽश्वो यस्य तु स्यात्प्रदक्षिणम् ॥ १६ ॥
आवर्तयुग्मं शुक्तिर्वा भुजयोरङ्गदीति सः ।
यस्योपरन्ध्रयोरूर्ध्वे द्वावावर्तौ स मेखली ॥ १७ ॥
दशावर्तस्तु योऽश्वः स्यादावर्तैर्दशभिः शुभैः ।
स्फिक्पिण्डावर्तको वाजी लेण्डपाती निगद्यते ।
* * * द्विशफो योऽश्वः कराली तु कुलान्तकः ॥ १८ ॥
यद्दन्तमूलमांसं चेद्बाह्यतो निर्गतं भवेत् ।
काकमूर्धा शिरःपुच्छशरीरेषु त्रिवर्णकः ॥ १९ ॥
शस्तवर्णोऽपि यो वाजी निन्द्यराजीसमन्वितः ।
भवेत्सिंहशरीराभः स स्यादश्वगडाभिधः ॥ २० ॥
मस्तकत्रिकवालेषु मिश्रवर्णो हयो ध्वजी ।
पञ्चभद्रस्तु हृत्पृष्ठमुखपार्श्वेषु पुष्पितः ॥ २१ ॥
पुच्छास्योरःशिरःपादस्थानेष्वष्टसु यः सितः ।
सोऽष्टमङ्गलकोऽप्यश्वः, श्वेते यस्योदरोरसी ॥ २२ ॥
अथ वा कृष्णशोणे ते स वैजयिकनामकः ।
वर्णेन वेष्टितः कट्यां यः सितेनेव वाससा ॥ २३ ॥
स[114b]संगीताभिधोऽथ स्यात्कर्कः कौकाहकः सितः ।
निचितो बिन्दुभिः कृष्णैराननोदरसक्थिषु ॥ २४ ॥
कुक्कुटः सिन्दुवारामस्त्वगादिः सिन्दुवारकः ।
ताम्रत्वङ्मुष्कवक्त्रोऽश्वः सिंदूरसनिभरोमवान् ॥ २५ ॥

6030 पर्वतीया १ दयो
6031 त्रिषु १ स्तु
6032 °वविकृतो
6033 श्रेव° for ऐव°
6034 °वैचम्मि १
6035 °रुगी १
6036 °मेखली १
6037 °दर्श° १ स्तु
6038 °पाती १
6040 °मांसकः २
6041 °मूर्धा १
6043 °गल १ सितः
6044 ध्वजी १
6045 °मद्र १ स्तु
6047 °नामके १ मः ( or सः )
6048 वैजयिक १
6049 वर्ण for कट्यां; सितेनैव
6050 संगीत १ निचि. तः
6051 °र्नोदरस्तु २
6052 कुक्कुटः १; °वारकः १

य: केशवाल्योः श्वेतः सिंहपोतः स उच्यते ।
गुह्याक्षित्वक्खरौष्ठेषु कृष्णकेसररोमभिः ॥ २६ ॥
बालधौ तु सितास्ते स्युः क्रौञ्चपत्राह्वया हयाः ।
अन्यवर्णः सितैः केशैर्मुञ्जकेशो हयो भवेत् ॥ २७ ॥
कृष्णैः केशैरन्यवर्णस्तुरगोऽञ्जनकेशकः ।
मिश्रकेशो मिश्रवर्णोऽल्परक्तः कृष्णरोमकः ॥ २८ ॥
चक्रवाकाभिधः पीतकृष्णवालोऽपि यो हयः ।
खोङ्गाहः श्वेतपिङ्गोऽश्वः खुङ्गाहः कृष्णवर्णकः ॥ २९ ॥
पीयूषवर्णः सेराहो हरितः पीतवर्णकः ।
लोहितस्तु कियाहः स्यादानीलो नीलको हयः ॥ ३० ॥
त्रियूहः कपिलोत्कृष्टो वोल्लाहः पन्दुवालधिः ।
उत्तराहो[115a] मनाक्पीलुः कृष्णजङ्घो भवेद्यदि ॥ ३१ ॥
सुरूहको गर्दभाभो वोरुखानस्तु पाटलः ।
कुहालस्तु मनाक्पीतः कृष्णः स्याद्यदि जानुनोः ॥ ३२ ॥
उकनाहः पीतरक्तः कृष्णरक्तोऽथ वा हयः ।
शोणः कोकनदाभो यो हरिः सीतच्छविस्तु यः ॥ ३३ ॥
हरिको हालिकश्चासौ पिङ्गलः सितकाचवत् ।
मल्लिकाक्षः सितैर्नेत्रैः कृष्णैस्त्वैन्द्रायुधो हयः ॥ ३४ ॥
कपिलो बभ्रुरोमाभो हंसः कर्बुरकस्तु सः ।
रक्तत्वग्धंसतुल्याङ्गः खञ्जनाभस्तु खञ्जनः ॥ ३५ ॥
आ नेत्रतो यस्य सितं सकर्णं
शिरो भवेत्प्राकृतकः स वाजी ।
यः श्वेतसुस्निग्धमुखाङ्घ्रिरश्व-
स्तं पञ्चकल्याणमुदीरयन्ति ॥ ३६ ॥

---

6054 °पोतः १
6056 °पत्राह्वया १
6057 हयो १
6058 °केशकः १
6059 °वर्णो १
6060 पात-for पीत-
6061 खौंगाह
6062 सीराहो २
6063 क्रियाहः १ स्यादानीलो १
6064 त्रियूहः १; गोलाहः १
6065 उत्तराहो १ मनाक्पीढ़ः
6066 सुरूहको १; वीरि° for वोरु°; पाटलः २
6067 कुद्दाल १
6068 उकनाहः १; रक्तोऽथवा
6070 हरिक
6071 °युधो १
6073 गंजनः १
6075 प्राकृतकः १
6077 °कल्याण°

श्वेतः सपत्नदमनो वदनाङ्घ्रिपुच्छे
नन्दीमुखस्तु मुखमूर्धपदेषु तादृक् ।
ज्योतिष्टकश्चरणलोचनपृष्ठवक्षः-
केशाननेषु धवलोऽखिलकृष्णगात्रः ॥ ३७ ॥

छादनिकस्तु स वाजी यस्य खुरा रोमभिर्निचिताः ।
पीनकटी[115b]जठरो रो॰[को] लम्बोदरो वाजी ॥ ३८ ॥

यस्य वर्णस्य सादृश्यं यद्वर्णः संप्रपद्यते ।
तदेव तस्य नामापि वेदितव्यं मनीषिभिः ॥ ३९ ॥

इन्दोः स्वरश्मिसदृशास्तपनीयभासः
स्वर्भर्तुरञ्जननिभास्तुरगा यमस्य ।
कर्का हरेर्दिनमणेः शुकपक्षवर्णाः
संफुल्लकिंशुकनिभास्तुरगाः कृशानोः ॥ ४० ॥

हलाहश्चित्रितो वाजी पुष्पाण्यङ्गेषु बिन्दवः ।
सारस्तु वर्णमिश्रस्त्वमावर्तो रोमसंस्थितिः ॥ ४१ ॥

तद्भेदा मुकुलं शुक्तिः संघः स्यादवलीढकः ।
शतपादी पादुका च पादुकार्धमिति स्मृताः ॥ ४२ ॥

स्वनामानुगतार्थाः स्युः सर्वेऽप्यावर्तभेदकाः ।
दशाधायुर्दशाशोऽथ क्षेत्रमङ्गल्यवस्थितिः ॥ ४३ ॥

निगालस्थो य आवर्तः स हि देवमणिः स्मृतः ।
तथा वक्षसि वाहस्य श्रीवत्सक इति स्मृतः ॥ ४४ ॥

एकः प्रपानेऽपि ललाट एको
द्वौ रन्ध्रयोर्द्वावुपरन्ध्रयोश्च ।
द्वौ मस्तके द्वावुरसि स्थितौ चे-
त्यावर्तकाः स्युः [116a]र्ध्रुवनामभाजः ॥ ४४ ॥

---

6078 °दमनो १
6079 नंदीमुख १
6080 ज्योतिष्टक १
6083 लंबोदरो १
6088 हरे दिन°
6089 कृशानोः ४६
6090 हलाह १
6091 सार १ स्त
6092 मुकुले १; संघ १
6093 शतपादी १ पादुका १ च पादुकार्ध १
6095 दशा १ धायु°; क्षेत्र १; °स्थिति २
6096 °लस्थो य आवर्तः; °मणिः १
6097 श्रीवत्सक १

सूनाश्वानां तालुनोऽधोऽथोत्तरोष्ठस्य पृष्ठकम् ।
प्रपानमूर्ध्वे त्वस्याली प्रोथो घोणास्ययोरपि ॥ ४५ ॥

ललामाश्वस्य पुण्ड्रे स ललामं तत्र न स्त्रियाम् ।
स्तुवः पुंसि ललाटाग्रं कटौ शङ्खश्रवोन्तरम् ।
गलनाडी हनूसंधौ निगालोऽथ गलादधः ॥ ४६ ॥

विदू नरौ मर्मविदू ततो*[ध]स्तात्प्रकीर्तितौ ।
स्कन्धपृष्ठं केसरं स्यात्केशान्तः श्रुतिपृष्ठतः ॥ ४७ ॥

काकसा कन्धरान्तः स्यादंसपृष्ठं वहो नरि ।
क्रोडस्तु कक्षाछन्नमध्यं कक्षाक्रोडवहान्तरा ॥ ४८ ॥

किणौ कक्षाधरेऽथाधोमन्दिरे समुदीरिते ।
पृष्ठभागे मन्दिरयोरुक्के जानु-कपालिके ॥ ४९ ॥

कले जङ्घापृष्ठगते इर्षीके तु तदन्तरे ।
तयोरधः पुरोभागो(गे) पलिहस्तः प्रकीर्तितः ॥ ५० ॥

तस्य पश्चिमतः कूर्चः क्रुष्टिके स्त्री तयोरधः ।
खुरसंधिस्ततोऽधस्ताच्छफं त्वली खुरः पुमान् ॥ ५१ ॥

निघृष्वो वर्तकस्त्वधश्शफश्च चटकोऽपि च ।
खुरप्रान्ते[116b]नखशिखा खुराधस्तलमस्त्रियाम् ॥ ५२ ॥

तलमध्ये क्षीरिका स्त्री मण्डूकी क्षीपिकान्तरे ।
पृष्ठाधरे तु नीरोधः पार्श्वे त्वस्य च मांसले ॥ ५३ ॥

वट्टके तु स्फिजोरूर्ध्वे तन्मध्ये सीवनी स्त्रियाम् ।
हृत्कुक्षिनाम्यन्तरगावुपरन्ध्रावुभौ मतौ ॥ ५४ ॥

---

6102 सूना १
6103 प्रोथी १
6104 ललामं २१
6105 स्तुव' १
6106 निगालो १
6107 मर्म विदू १
6108 केसरं २; केशांतः १
6109 काकसा १, वहो १
6110 क्रोड १; कक्षा १
6111 मंदिरे १
6112 [illegible]
6113 कले २
6114 पलिहस्त. १
6115 क्रुष्टिके २
6116 °संधि १
6117 निघृष्वो ३
6118 °शिखा १
6119 क्षीरिका १
6120 नीरोधः १
6121 वट्टके १; सीवनी १
6122 [illegible]

अघोऽनयोः पृष्ठभागे रन्ध्रौ नरि च कीर्तितौ ।
रन्ध्राधरे चक्रसंधी स्थूरे ऊर्वोरधोऽस्त्रियौ ॥ ५५ ॥
कश्यं तु मध्यमश्वानां वालहस्तस्तु वालधिः ।
लाङ्गूलं लूमं पुच्छोऽस्त्री पिच्छः पुंसि च संमतः ॥ ५६ ॥
स उत्पुच्छयमानः स्यादुदस्यन्पुच्छमन्यवत् ।
काण्डूको वाजिनः पुच्छं वयसो ज्ञापकं हि यत् ।
दन्तचिह्नं व्यञ्जनं तत्कवी तु कविका स्त्रियौ ॥ ५७ ॥
मुखयन्त्रं च कवियं खलीनं खलिनोऽस्त्रियः ।
पञ्चाङ्गी चक्रपट्टे तु तलिका तलसारकम् ॥ ५८ ॥
वागावक्षेपणी वल्गा द्वयोः कविगुणे कुशा ।
पल्याणं स्यात्पल्ययणं प्रक्षरं प्रक्षरोऽस्त्रियाम् ।
दामाञ्चनं पादपा[117a]शो निगलः पुंनपुंसके ।
खलीनलम्बरज्जुस्तु वल्गावक्षेपणी कुशा ॥ ५९ ॥
कशा कषा चर्मदण्डरश्मिः स्यादथ वारकः ।
भवेद्वल्गमपालाह्वो हयस्कन्धो हयच्छटा ॥ ६१ ॥
ह्रेषा हेषा वाजिशब्दो वेल्लिते तु भुवि त्रिषु ।
उपावृत्तः परावृत्तो लुठितश्च निगद्यते ॥ ६२ ॥
धारास्तद्गतयः पञ्च धौर्यं धौरितकं तथा ।
धौरणं धोरितं चैतन्मयूरादिगतिप्रभम् ॥ ६३ ॥
वल्गितं त्वग्रकायस्य समुल्लासात्त तत्रिकम् ।
आकुञ्चितास्यं गमनं लङ्घनं तु प्लुतं भवेत् ॥ ६४ ॥
मृगपक्ष्यादिगतिवद्योत्तेजित रेचिते ।
मध्यवेगेन गमनं यद्भवेच्छ्लथवल्गया ॥ ६५ ॥
उत्तेरितं तूपकण्ठमास्कन्दितकमित्यपि ।
उत्प्लुत्योत्प्लुत्य गमनं यद्भवेदतिवेगतः ॥ ६६ ॥

6123 किर्तितो
6124 °सधी १ स्थूरे १
6125 कर्स्यं १
6126 पिछ. ६
6129 व्यंजन १
6130 मुखाचियं for च कवियं
6133 पल्ययणं २
6134 निगल ३
6136 °रश्मि ३
6137 °पालाह्वो १, °छटा २
6138 °शब्दो ३
6139 लुठित ३ श्च
6141 धोरित ४
6143 प्लुतं २
6146 °दितक ३

आश्वकैस्त्वथ चारः सातुरगी सादि-सादिनौ ।
अश्वस्य विक्रयी यः स्यात्स हेलरुक उच्यते ।
द्वयो रथः स्यन्दनोऽस्त्री शताङ्गश्चक्रुरस्तथा ।
पद्गः सांग्रामिके याने[117b]चक्रशालिन्यथेतरत् ॥ ६७ ॥
चक्रयानं पुष्परथो देश्वतार्थः समरुद्रः ।
योगो रथो वैनयिकोऽध्वरथः पारियानिकः ॥ ६८ ॥
कर्णीरथः प्रवहणं डयनं रथगर्भकः ।
पुंस्कन्धवाह्यं यद्यानं विगानामिध उच्यते ॥ ६९ ॥
आश्वोऽश्वैरुह्यमानोऽसौ तैश्चतुर्भिः स चातुरः ।
क्लीबेऽनः शकटस्तु स्याद्गन्त्री गान्त्री स्त्रियामुभे ॥ ७० ॥
* * * * * * * * * * * * * * * * ।
कूबरी न द्वयोर्गात्रिं कूबरी च वहिन्यपि ।
न स्त्री कम्बलिवाह्यं स्याद्वाह्यं न नरि योषिति ।
शिबिके * याप्ययानं दोला प्रेङ्खोलिकापि च ॥ ७१ ॥
रज्जुप्रालम्बहिन्दोलो दोला प्रेङ्खा च योषिति ।
शयानिका शिशूनां सा शयनाय कृता यदि ।
उभौ तु द्वैप-वैयाघ्रौ द्वीपिचर्मावृते रथे ।
तद्वत्काम्बलवास्त्राद्याः कम्बलादिभिरावृते ॥ ७२ ॥
पाण्डुकम्बलसंवीतः स्यन्दनः पाण्डुकम्बलः ।
अध्यागवं त्वष्टगवयुक्ते स्याच्छकटे त्रिषु ।
रथ्या च रथकट्या च रथ वृ[118a]न्दे स्त्रियामुभे ॥ ७३ ॥
रथिको रथनश्चस्याद्रथिरो रथरोह्यपि ।
एवं शाकटिकश्च स्याद्रथिकाद्या विशेष्यगाः ॥ ७४ ॥
नियन्ता प्राजिता यन्ता सव्येष्ठा क्षत्तृ-सारथी ।
सूतो रथकुटुम्बी च प्रचेता दक्षिणस्थवत् ॥ ७५ ॥

6149 °रुक १
6151 पद्गः ५
6152 °रुद्रः १
6153 °यिको १; °यानिकः २
6154 °गर्भकः ४
6157 शकट २
6158 is to be iqnored
6161 प्रेङ्खो २ लिका
6162 प्रेखा ५
6163 शयानिका १; शायनाय
6164 °वैयाघ्रौ २
6165 °स्काबल १
6166 °कंबलाः
6167 °गव २ युक्ते
6168 °कट्या २
6170 शाकटिक १

व्याप्नुवन्वाहनं सर्वं सर्वपत्रीण उच्यते ।
धूर्वी-धुरौ च यानाग्रमक्षो धूस्तु दृढा यदि ॥ ७७ ॥
तदा दृढधुराथाक्षो दृढधूरेव संमतः ।
रथपादो रथ्यमरि रथाङ्गं चक्रमस्त्रियाम् ॥ ७८ ॥
चक्रधारा तु नेमिः स्त्री प्रधिर्द्वैद्वेऽथ पिण्डिका ।
* * * * * नाभिर्ना मणिराणिरणिर्द्वयोः ॥ ७९ ॥
अक्षाग्रकीलकेऽथाली वरूथो रथगुप्तिका ।
युगंधरः कूबरोऽस्त्री वरूथश्च निषङ्गथिः ॥ ८० ॥
युगं द्वितीयं प्रासङ्गो युगं स्त्रीशान्तबन्धनम् ।
अनुकर्षो दार्वधःस्थं शम्या स्त्री युगकीलकः ॥ ८१ ॥
अपस्करो रथाङ्गं स्यान्नभ्योऽक्षो नाभये हितः ।
सर्वं स्याद्वाहनं वाह्यं वह्यं पत्रं च धोरणम् ॥ ८२ ॥
युग्मं यानं तु न स्त्री स्यादथ वै[118b]नीतकोऽस्त्रियाम् ।
परंपरावाहनेऽथ राजार्हं राजवाहनम् ॥ ८३ ॥
पादाति-पत्ति-पदगाः पदिकः पद्ग-पचरौ ॥ ८४ ॥
पदातिकः पदाजिश्च पादातश्च पदातिवत् ।
पादातिकश्चाथ भवेत्पादातं पत्तिसंहतिः ॥ ८५ ॥
शस्त्राजीवे काण्डपृष्ठा युधीयायुधिकाः समाः ।
भटाः प्राहारिका युध्मा योधा योद्धार इत्यपि ॥ ८६ ॥
सेनारक्षाः सैनिकास्ते सेनायां मिलिता अमी ।
सैन्याश्च सैनिका ये तु राजानं योधयन्त्यमी ॥ ८७ ॥
राजयुद्धाय उद्दिष्टा राजानं रचयन्ति ये ।
स्युरे * * * * * * * [ आ ]हस्राः स्युः सहस्रिणः ।
ये सहस्रेण युध्यन्ते धनुष्मन्तस्तु धन्विनः ॥ ८८ ॥

6173 °पत्रीण १
6174 नामामक्षो ४ धस्तु
6177 प्रधिः ३ द्वैद्वे
6179 °कीलके ३
6181 प्रासंगो १ युगं १
6182 दार्वधस्थं २ शम्या १; °लकः २
6183 नभ्यो १
6185 यानं तु ५; °तांचे १
6186 °वाहनं १
6189 पादातिक ११; पादातं १ पंते°
6190 °युधियायुधिकाः ४
6191 योद्धार ५
6192 सैनिका २ स्ते
6193 सैनिका २
6194 °युध्वान १

धानुष्का अस्त्रिणो धन्वधराश्चैव निषङ्गिणः ।
तूणिनः कृतहस्तस्तु कृतपुङ्खश्च यः शरम् ॥ ९० ॥
सुमपुङ्के पराद्धेषुः ⁕[पु]नर्लक्ष्य⁕[च्यु]ताशुगः ।
लघुहस्तः शीघ्रवेधी दूरवेधी तु दूरतः ॥ ९१ ॥
लक्ष्यवेद्धा दूरपाती काण्डीरः काण्डवान्समौ ।
प्रासिकः कौन्तिकस्तुल्यौ शाक्ती[119a]कः शक्तिहेतिकः ॥ ९२ ॥
याष्टीक-पारश्वधिकौ यष्टिस्वधितिहेतिकौ ।
नैस्त्रिंशिकस्त्वासिकः स्याचाक्रिकश्चक्रहेतिकः ॥ ९३ ॥
वर्मी फलकपाणिः स्यात्पताकी वैजयन्तिकः ।
परिधिस्थः परिचरश्चामरी रौमगुच्छिकः ॥ ९४ ॥
सहकृत्वा सहायः स्यादनुगाम्यप्यनुप्लवः ।
भवेदनुचरश्चाभिसरः पत्त्यादयस्त्रिषु ॥ ९५ ॥
साहायकं तु साहाय्यं समूहे तु सहायता ।
पुरोगमः पुरोगः स्यात्पुरोगामी पुरःसरः ॥ ९६ ॥
प्रष्ठाग्रतःसराग्रेसर उक्तः प्रतिष्कशः ।
सव्यसाची तु वामेन बाहुनापि शरं क्षिपन् ।
आमुक्तः प्रतिमुक्तश्च पिनद्धश्चापिनद्धवत् ॥ ९७ ॥
स्याद्व्यूढकङ्कटः सज्ञो वर्मितौ दंशितश्च सः ।
संनद्धश्च पुरोगाद्या एते स्युर्मेघलिङ्गकाः ॥ ९८ ॥
समूहे स्यात्कवचिनां क्लीबे कावचिकं तथा ।
अधिकाङ्गोऽस्त्रियां सारसनं हृदि स [119b] कञ्चुकैः ।
ध्रियते यत्तन्त्रं तु वर्म वर्म च दंशनम् ॥ ९९ ॥
उरश्छदः कङ्कटको जगरो दंश इत्यपि ।
संनाहः कवचो न स्त्री माठिर्माठी स्त्रियामुभे ॥ २०० ॥

---

6198 °पुंख २ श्च
6201 °पाती २
6202 कौतिक २; °ह्वेतिकः २
6203 याष्टिक १ पारस्वधिकौ १ याष्टे १ स्व°
6204 °सिकः २; °हेतिकः २
6205 °पाणिः २; यंतिकः २
6206 °चरः २ श्चा°
6209 साहाय्यं २; सहायता १
6214 सज्जो for सज्ञो
6215 संनद्ध ५
6216 कावचिकं १
6217 सारसनं २
6218 दंसनं
6219 कंटकको

शिरस्त्राणं शिरस्कं च शीर्षण्यं शीर्षकं च तत् ।
नागोदमुदरत्राणं जङ्घात्राणं तु मत्कुणम् ॥ १ ॥

बाहुत्राणं बाहुलं स्याज्जालिका त्वङ्गरक्षिणी ।
जालप्रायाऽऽयसी चाथ क्षेयः क्षेतव्यमात्रकः ॥ २ ॥
क्षय्यस्तु शक्यः क्षेतुं यो जेयो जेतव्यमात्रके ।
जय्यस्तु शक्यो जेतुं यो जिष्णुर्जेता च जित्वरः ॥ ३ ॥

जैत्रोऽथ धर्मविजयी संतुष्येत्सेवयैव यः ।
द्रव्येण त्वर्थविजयी स्यात्त्वसुरविजय्यसौ ।
प्राणोपघाती भूकामोऽथोर्जस्व्यूर्जस्वलः समौ ।
स्यादुरस्वानुरसिलो यस्य व्यूढमुरो भवेत् ॥ ४ ॥

शूरः सूरश्चारभटो वीरो विक्रान्त इत्यपि ।
भडिलौजसिकौ यस्तु याति विद्विपतः प्रति ॥ ५ ॥

सोऽभ्यमित्रीयोऽप्यभ्यमि[120a]त्रीण इत्यपि ।
सांयुगीनो रणे साधुः सङ्ग्रामाय तु यः प्रभुः ॥ ६ ॥

भवेत्सांग्रामिकः सोऽथ जितकाशी जिताहवः ।
गेहेनर्दी गेहेशूरः क्षेपाद्याः स्युश्लिङ्गकाः ॥ ७ ॥

ध्वजिनी वाहिनी सेनानीकिनी च पताकिनी ।
वरूथिनी च पृतना चमु-चम्वौ स्त्रियौ बलम् ॥ ८ ॥

तन्त्रं सैन्यं च कटकं चक्रं चाविक्रमस्त्रियाम् ।
स्कन्धावारोऽपि दण्डोऽथ व्यूहो विन्यसनं पृतः ॥ ९ ॥

दण्डादयो व्यूहभेदाश्चक्रव्यूहादयोऽपरे ।
मत्यासारो व्यूहपार्ष्णिः सैन्यपृष्ठे प्रतिग्रहः ॥ १० ॥

---

6221 °त्रातो for °त्राणं, शीर्षके ४
6222-3=AC p. 104. 768 *cd.*-769 *ab.*—6222 °त्राणं २; मुत्कुणं २।—6223 बाहुले २
6224 °प्रायाऽऽयसी ४; °मात्रक- २
6225 क्षय्य १ स्तु for क्षय्यस्तु; जेयो १, °मात्रके २
6226 जय्य १ स्तु, जैष्णु° for जिष्णु°, जित्वर ३
6227 जैत्रो ४; °विजयी १
6228 विजयी १; °विजय्य १ सौ
6229 घाताभू, °स्वल २
6230 °सिलो २
6232 °त्रियै ७
6233 °मित्रीण ११
6235 °मिक. १, °ाच २ for °हव
6236 नर्दी १
6240 दंडो १७ प व्यूहो १
6241 °दयो १, °व्यूहा १ दयो
6242=AC 747 *cd.* प्रत्यासारो १; °पार्ष्णि २, प्रतिग्रह १

एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ११ ॥
सेनामुखं गुल्म-गणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिण्युच्यते बुधैः ॥ १२ ॥

क्षुद्रकानां माळवानां सेनायां वृन्दसंयुता ।
वदन्ति तां कोषविदो बुधाः क्षौद्रकमालवीम् ।
सेनाजघनभागे तु भवेत्प्रतिस[120b]रस्त्रिषु ।
नासीरं ना न सेनाग्रे सज्जनं तूपरक्षणम् ।
शस्त्रं ना न प्रहरण-वधत्रास्त्र-धनूंषि च ॥ १३ ॥

हस्तुरस्त्यायुधं हेतिर्दलपत्त्रोत्रमन्तिमे ।
पाणिमुक्तं तु शक्त्यादि यन्त्रमुक्तं शरादिकम् ॥ १४ ॥
अमुक्तं तु कृपाणादि यष्ट्याद्यं स्याद्द्वयात्मकम् ।
धन्विष्वासौ द्रुणं चासो धन्व कार्मुकमस्त्रकम् ॥ १५ ॥

शरासनं धनुश्चाप-कोदण्डाः स्युर्न योषिति ।
दृढधन्वा दृढेष्वासोऽथाह्वये शतधन्ववत् ।
भवेच्छतधनुश्चाद्यं मेधलिङ्गा अमी मताः ।
कोटिरस्यार्तिरटनी मध्यभागस्तु लस्तकः ॥ १६ ॥

मौर्वी ज्या शिञ्जिनी शिञ्जा जीवा वामा द्रुणा च सा ।
गुणो बाणासनं च स्याच्चारणमादिगव्यकम् ॥ १७ ॥

गोधा तु तलमन्त्ये स्याच्छिञ्जिन्याघातवारणा ।
वैष्णवं समपादं च वैशाखं मण्डलं तथा ॥ १८ ॥

प्रत्यालीढं तथालीढमिति षट्स्थानसंग्रहः ।
शस्त्राभ्यासस्तु खुरली तद्भूमिस्तु[121a]सरूलिका ॥ १९ ॥

---

6243 पत्तिः १
6245 सोभामुखं १ गुल्म १ गणौ १ वाहिनी १ पृतना १ चमुः १
6246 अनीकिनी १
6249 प्रतिसर १
6250 °रक्षणं २
6252 हस्त्र २
6253 °युर्क यु for °मुक्तं तु; शक्त्यादि १ यंन-
6254 अमुक्तं १; °त्मकं १
6257 °ष्वासो २
6258 °धनु २; मता २
6259 °रटना: २; लस्तकः १
6260 वामगृहीता for वामा
6261 तारणं मादिगव्यक । १७ ॥
6262 तल २; शिंजिन्माघा°
6263 वैष्णवं १ समपाद १ वैशाखं १ मंडलं १

उपासनं शराभ्यासोऽथो शरव्यं च वेध्यकम् ।
लक्ष्यं लक्षं निमित्तं च चित्रपुङ्खः शिलीमुखः ॥ २० ॥

शरस्तु न स्त्रियां रोपो विशिखः खग आशुगः ।
अजिह्मगो गार्धपक्षः पत्रि-मार्गण-सायकाः ॥ २१ ॥

कङ्कपत्रः पत्रवाहः पृषत्कः सायकश्च सः ।
कलम्बः प्रदरोऽस्त्रीकौ बाण-काण्डाविषुस्त्रिषु ॥ २२ ॥
प्रक्ष्वेडनास्तु नाराचा सर्वलोहास्तथैषणाः ।
नालीको नलिका मोच्ये निरस्ताः प्रहिते शरे ॥ २३ ॥
विपाक्ते लिप्तको दिग्धो नीलीकाद्या विशेष्यवत् ।
क्षुरप्रचन्द्रलार्धेन्दु-तीरे भल्लादयो भिदः ॥ २४ ॥
शरवाणिः स्त्रीपुमुखं कर्तरी पुङ्खमस्त्रियाम् ।
पक्षो वाजः पत्रपाली पत्रणा पत्रलं त्रिषु ।
शरसंक्रमणे पुंसि वातरायण उच्यते ।
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता ॥ २६ ॥

निषङ्ग-तूणीर-कलाप-बाणा-
वापा उपासङ्ग उपाश्रयश्च ।
स्त्रीपुंसयोः स्यादिषुधिश्च केकि-
छन्दं द्वि[121b]हीनं त्रितयेऽत्र तूणी ॥ २७ ॥

निस्त्रिंशखड्गवारिच्छिदिरो धारापथस्त्रिमार्गोऽसिः ।
खड्गश्च गाढमुष्टिर्लोहभुजंगो जयश्रीदः ॥ २८ ॥

कौक्षेयको विशसनो धाराधर-चन्द्रहास-धाराङ्गाः ।
करवालः करपालः कोशधरो मण्डलाग्रश्च ॥ २९ ॥
श्रीगर्भ-चन्द्रमासौ शल-कृपाणौ द्वयो रिष्टिः ।
वारङ्गः त्सरुरेतन्मुष्टिः स्यान्मेखलश्चवन्यः ॥ ३० ॥

6266 शराभ्यासो २
6267 निमित्तं ५
6271 °विषु २१ त्रिषु
6272 °थैषणाः ४ *
6273 नालिको; °मोच्ये २
6274 दिग्धो २
6275 क्षुरप्र १ तद्दला १ र्द्द १ निरे
6276 पुंख २
6277 पत्रणाद्यास्त्वर्दन्त्रिषु ॥ १५ ॥
6278 °रायण १
6279 °च्छेदो २
6280 -तूणिर-
6283 तूणी १
6284 °वारिच्छिदिरौ
6285 गाढमुष्टी; जयश्रीदः
6287 करपाल. कोशः धरो
6288 °ष्टिः
6289 वार् त्सुमरो° (corrupt).

एकैकैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका ।
पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम् ॥ ११ ॥
सेनामुखं गुल्म-गणौ वाहिनी पृतना चमूः ।
अनीकिनी दशानीकिन्यक्षौहिण्युच्यते बुधैः ॥ १२ ॥

क्षुद्रकाणां मालवानां सेनायां वृन्दसंयुता ।
वदन्ति तां कोषविदो बुधाः क्षौद्रकमालवीम् ।
सेनाजघनभागे तु भवेत्प्रतिस[120b]रस्त्रिपु ।
नासीरं ना न सेनाग्रं सज्जनं तूपरक्षणम् ।
शल्लं ना न प्रहरण-वधत्रास्त्र-धनूंषि च ॥ १३ ॥

हल्तुरुप्यायुधं हेतिर्दलपसस्त्रमन्तिमे ।
पाणिमुक्तं तु शक्त्यादि यन्त्रमुक्तं शरादिकम् ॥ १४ ॥
अमुक्तं तु कृपाणादि यच्चार्यं साह्वयास्त्रकम् ।
धन्विष्वासौ द्रुणं चासो धन्व कार्मुकमस्त्रकम् ॥ १५ ॥

शरासनं धनुश्चाप-कोदण्डाः स्युर्न योषिति ।
दृढधन्वा दृढेष्वासोऽप्याह्वये शतधन्ववत् ।
भवेच्छतधनुश्चायं भेदलिङ्गा अमी मताः ।
कोटिरस्यार्टिरटनी मध्यभागस्तु लस्तकः ॥ १६ ॥
मौर्वी ज्या शिञ्जिनी शिञ्जा जीवा वामा द्रुणा च सा ।
गुणो बाणासनं च स्यात्तारणमादिगव्यकम् ॥ १७ ॥

गोधा तु तलमन्त्ये स्याच्छिञ्जिन्याघातवारणा ।
वैष्णवं समपादं च वैशाखं मण्डलं तथा ॥ १८ ॥

प्रत्यालीढं तथालीढमिति षट्स्थानसंग्रहः ।
शस्त्राभ्यासस्तु खुरली तद्भूमिस्तु[121a]खलूरिका ॥ १९ ॥

6243 पत्तिः १
6245 सोमामुखं १ गुल्म १ गणौ १ वाहिनी १ पृतना १ चमुः १
6246 अनीकिनी १
6249 प्रतिसर १
6250 °रक्षणं २
6252 हल्तु २
6253 °मुक्तं यु for °मुक्तं तु; शक्त्यादि १ यंत्रमुक्तं १
6254 अमुक्तं १; °स्त्रकं १
6257 °ष्वासो २
6258 °धनु २; मता २
6259 °रटनाः २; लस्तकः १
6260 वामगृहीता for वामा
6261 तारणं मादिगव्यक । १७ ॥
6262 तल २; शिंजिन्माघा°
6263 वैष्णवं १ समपादं १ वैशाखं १ मंडलं १
6264 प्रत्यालीढं १ तथालीढं १

उपासनं शराभ्यासोऽथो शरव्यं च वेध्यकम् ।
लक्ष्यं लक्षं निमित्तं च चित्रपुङ्खः शिलीमुखः ॥ २० ॥
शरस्तु न स्त्रियां रोपो विशिखः खग आशुगः ।
अजिह्मगो गार्ध्रपक्षः पत्रि-मार्गण-सायकाः ॥ २१ ॥
कङ्कपत्रः पत्रवाहः पृषत्कः सायकश्च सः ।
कलम्बः प्रदरोऽस्त्रीकौ बाण-काण्डाविषुस्त्रिषु ॥ २२ ॥
प्रक्ष्वेडनास्तु नाराचाः सर्वलोहास्तथैषणाः ।
नालीको नलिका मोच्ये निरस्तः प्रहिते शरे ॥ २३ ॥
विषाक्ते लिप्तको दिग्धो नीलीकाद्या विशेष्यवत् ।
क्षुरप्रचन्द्रलार्धेन्दु-तीरै भल्लादयो भिदः ॥ २४ ॥
शरपाणिः स्त्रीपुमुखं कर्तरी पुङ्खमस्त्रियाम् ।
पक्षो वाजः पत्रपाली पत्रणा पत्रकं त्रिषु ।
शरसंक्रमणे पुंसि वातरायण उच्यते ।
बाणमुक्तिर्व्यवच्छेदो दीप्तिर्वेगस्य तीव्रता ॥ २६ ॥
निषङ्ग-तूणीर-कलाप-बाणा-
चापा उपासङ्ग उपाश्रयश्च ।
स्त्रीपुंसयोः स्यादिषुधिश्च केकि-
छन्दं द्वि[121b]हीनं त्रितयेऽत्र तूणी ॥ २७ ॥
निस्त्रिंशस्तरवारिरिष्टिरिरो धारापथस्तिमार्गोऽसिः ।
खड्गश्च गाढमुष्टिर्लोहभुजंगो जयश्रीदः ॥ २८ ॥
कौक्षेयको विशसनो धाराधर-चन्द्रहास-धाराङ्गाः ।
करवालः करपालः कोशधरो मण्डलाग्रश्च ॥ २९ ॥
श्रीगर्भ-चन्द्रमासौ शस्त्र-कृपाणौ द्वयो रिष्टिः ।
वारङ्गः त्सरुरेतन्मुष्टिः स्यान्मेखलाबन्धः ॥ ३० ॥

6266 शराभ्यासो २
6267 निमित्तं ५
6271 °त्रिषु २१ त्रिषु
6272 °वैषणाः ४ °.
6273 नालिको; °मोच्ये २
6274 दिग्धो २
6275 क्षुरप्र १ द्वला १ र्द्धेन्दु १ तीरै
6276 पुंस १
6277 पत्रपालापत्रणात्रिषु ॥ २५ ॥
6278 °रायण १
6279 °चोद्ये २
6280 –तूणीर॰
6283 तूणी १
6284 °वारिरिष्टिरो
6285 गाढमुष्टी; जयश्रीद.
6287 करपाल कोशधरो
6288 °ग्रे२
6289 वारं त्सरुमेर (corrupt).

न स्त्री बलसहे स्थाम-स्थामनी शुष्म-शुष्मणी ।
ओजः शौर्यं च शक्तिः स्त्री विक्रमस्त्वतिशक्तिता ॥ ५१ ॥
संग्रामः समुदाय-संगर-समाघाताभिसंपात-सं-
स्फोटाराति-समाह्वया अभिमरोमाराङ्कपुम्विग्रहः ।
संस्फेटः कलहः कलिः समुदयः प्राह-प्रघाताहवा-
क्रन्दाभ्यागम-संप्रहार-समिवाभ्यामर्द्द-संमर्द्दकाः ॥ ५२ ॥
स्त्रीत्वे स्युः समिदाजि-युत्समितयो न स्त्री रणानीकभाक्
संख्यं संयुग-संपराय-समराः संयन्न पुंलिङ्गभाक् ॥ ४८ ॥
युद्धास्कन्दन-सांपरायिक-मृधं द्वंद्वं समीकं तथा
जन्यं च प्रविदारणं प्रधनवच्चायोधनं मण्डनम् ।
आडम्बरोऽस्त्री पटहो चक्रलः सूरयो रणः ।
आममद्गुरिका भाम[123b]युद्धं दोर्भ्यां तु तन्मिथः ॥ ५७ ॥
नियुद्धं तुमुलं तु स्यात्संग्रामः संकुलो हि यः ।
युद्धे प्रवृत्ते केशेषु केशेषु ग्रहपूर्वकम् ॥ ५८ ॥
केशाकेशीत्यव्ययं स्याद्दण्डादण्डि तु यो रणः ।
दण्डैर्दण्डैः प्रहृत्यास्ति बाहूबाहवि तादृशः ॥ ५९ ॥
यस्मिन्प्रहरणे दण्डौ द्वौ द्विदण्डि तदीरितम् ।
उभाहस्त्युभयाहस्ति द्विमुसल्येवमुन्नयेत् ॥ ६० ॥
त्रिषु रौक्मिण-सौभद्रौ रुक्मिण्याद्यर्थकौ रणौ ।
भारतादिकयोधौ तौ मतौ भारत-कौरवौ ॥ ६१ ॥
मल्लो नियुद्धकुशलो मल्लयात्रा तु मल्लवी ।
नियुद्धभूरक्षवाटे क्रन्दनं योधशब्दितम् ।
अवमर्दः पीडनं स्यान्निसुम्भोऽपि निशुम्भवत् ॥ ६१ ॥
बलात्कारो हठः खप्पः प्रसभं स्खलितं छलम् ।
प्रपातस्त्वभ्यवस्कन्दोऽभ्यवस्कन्दनमित्यपि ॥ ६२ ॥

---

6335 समाह्वयाचमिमरो
6345 प्रधन पचायोधरे
6346 °मुद्गरिका १
6347 नियुद्धं १ तु मूल १ तु
6349 °केशी १; °दंडि १
6350 प्रहृत्यास्ति; °बाहवि १
6351 द्विदंडि १
6352 °याहस्ति २ द्विमुसल्ये १
6353 रौक्मिण १
6355 मल्लो १, मल्वी १
6356 °वाटे १
6357 निशुंभ ४ वत्
6358 छलं २
6360 घाति ५ हिंयं

स्यादभ्यासादनं धाटी डिम्बं लवी च विप्लवः ।
उद्रवो डम्बरश्च स्यात्सौप्तिकं रात्रिमारणम् ॥ ६३ ॥
वैरनि[124a]र्यातनं वैरशुद्धिर्वैरप्रतिक्रिया ।
अवहारो युद्धिरामोऽथ जयो विजयः समौ ॥ ६४ ॥
पराजयो रणे भङ्गोऽथापयानं पलायनम् ।
प्रद्रावो द्राव-संद्राव-संदावा विद्रवो द्रवः ॥ ६५ ॥
अपक्रमोऽप्यथ त्रय्यां पराभूत-पराजितौ ।
परिभूतोऽभिभूतः स्यादाचगन्धोऽपि भग्नवत् ।
उत्पिञ्जलः समुत्पिञ्ज-पिञ्जलौ लुपिताकुलौ ।
कान्दिशीकस्तु यो भीत्या व्याकुलः प्रपलायितः ।
पलायितस्तु नष्टः स्यादपक्रान्तस्तिरोहितः ॥ ६६ ॥
गृहीतदिग्विद्रुतश्च प्रद्रुतश्च विशेष्यवत् ।
प्रस्कन्नः पतितस्तुल्यो प्रहतो घातितोऽपि सः ॥ ६७ ॥
पुंस्यालम्भ-निशुम्भ-पिञ्ज-विशरोन्माथाश्च घातो वधो
मारोऽपि प्रथमोऽस्त्रियां निगदिते संज्ञप्ति-हिंसे स्त्रियौ ।
क्लीबे स्युः प्रतिघातनं विशसनं व्यापादनं वर्जनं
किंचापासन-मारण-प्रशमन-प्रोज्जासनोद्वासनम् ॥ ६८ ॥
प्रतिघातनं विशरणं वि[124b]शारणं
कदन-प्रवासन-परासनानि च ।
क्रथनं तथा प्रमथनं विकारणं
क्षणनं निषूदन-समापने अपि ॥ ६९ ॥
निस्तर्हण-विनिबर्हण-निर्वासन-संप्रमापणानि स्युः ।
निर्यातन-निर्वापण-हिंसनमपि संनिपातनं वात्र ॥ ७० ॥
स्युः कालधर्म-प्रलयात्ययान्त-
दिष्टान्त-नाशाः परलोकयात्रा ।

---

6361 उद्रगो; सौप्तिकं १
6362 °क्रिया ३
6363 अवहारो १; विजयः २
6364 पराजयो १; स्थापलानं for ऽथापयानं
6366 अपक्रमो ९
6368 उत्तिंजश्च for °जल·
6369 कांदिसीक १ स्तु योभ्याला

6371 प्रद्रुत ७ श्च
6372 पतित २ स्तुल्यो; घावितो ३
6373 °पंज° for °पिंज°
6378 °परासमानि
6379 त्रिकारणं for विका°
6380 क्षणेनं
6382 सनिपातनं ४०

स्याद्दीर्घनिद्रा च मृतिश्च संस्था
मृत्युर्द्वयोः स्यादपि पञ्चता स्त्री ॥ ७१ ॥
पञ्चत्वमस्तं मरणं निमीलनं
तत्रावसानं निधनस्तु न स्त्रियाम् ।
मारिश्च मारी मरकः स सर्वत-
श्चिन्ता चिता स्याच्च चितिस्तथा स्त्रियाम् ॥ ७२ ॥
रुण्डः शरीरं विशिरस्तु मुक्तं
न स्त्री कवन्धो यदि तत्क्रियावत् ।
क्ष(श)वस्तु पण्डे मृतकं तु पूति-
विवर्धनोऽस्त्री कुणपः शवोऽस्त्री ॥ ७३ ॥
मृतः प्रमीतश्च परासु-संस्थितौ
प्रेतः परेतो व्यसु......स्त्री ।
आलेख्यशेषोऽपि यशोवशेष-
स्तथोपसंपन्नक-नामशेषौ ॥ ७४ ॥
[125a] द्युपात-लोकान्तरगासपञ्चत-
व्यापन्न-नष्टाश्च विशेष्यलिङ्गगाः ।
मृतस्य शय्या तु खट्वः स्त्रियां महा-
शय्याप्यपस्नानमजीवितालुतिः ॥ ७५ ॥
मृतयान काष्ठमल्ले गाङ्गेष्टी कटशर्करा ।
सूना स्त्रियां वधस्थाने मतमाघातनं तथा ।
पितृवसतिः पितृविपिनं करवीरं दाहसा(स)रश्च ।
संकटमघमाशौचं भवत्यशौचं च तद्वदेवेह ॥ ७६ ॥
प्रग्रहोपग्रहौ तत्र वन्दी स्त्रियां
यद्बलद्धन्धनं शत्रुदारादिनः ।
गुप्ति-कारे स्त्रियौ पुंसि वारो भवेत्
तत्र वन्दी गृहं बन्धनस्यालयः ॥ ७७ ॥
इति क्षत्रवर्गः ।

---

6386 वंचता for पञ्चता
6388 निधन १८
6389 मरक ३
6390 स्त्रियां ३
6394 शवो ५
6395 °संस्थिताः
6396 व्यसुमृतऽस्त्री (corrupt)
6400 °नष्टा १६; °लिंगगा ४
6402 °स्नान १
6403 °मल्ले २ गांगेष्टी
6404 सूता for सूना; °तनं २
6405 °सारश्च
6406 °त्यशौचं ४
6407 वंदी ३

इति क्षत्रवर्गः।

ऊरव्या ऊरुजा वैश्या अर्या भूमिस्पृशो विशः ।
वृत्तिर्वार्त्ता जीविका स्यादाजीवो वर्तनं तथा ॥ १ ॥
स्वाजीवनं चाथ कृषिः कर्षणं प्रमृतानृते ।
उञ्छो धान्यकणादानं कणिशाद्यर्जनं शिलम् ॥ २ ॥
ऋतं द्वे अमृतं तु स्यादयाचितमथो मृतम् ।
याचितं स्याद्वणिज्या तु न ना वाणि[125b]ज्यमन्तिमे ॥ ३ ॥
सत्यानृतमृणं तु स्यात्प्रामीत्यं पर्युदञ्चनम् ।
कुसीदं च तथोद्धारो मुक्तौ विगणनं मतम् ॥ ४ ॥
तत्तत्काले देयमृणं कलापकमुदीरितम् ।
अश्वत्थकं यवबुसकं च ग्रैष्मकमित्यपि ॥ ५ ॥
आवरसमकं त्वृणमुक्तं यदन्यवर्षे प्रदेयं स्यात् ।
सांवत्सरिकं सांवत्सरकं वर्षेण यद्देयम् ॥ ६ ॥
मासादिके देयमृणं मासिकं वार्षिकं त्रिषु ।
प्रार्णं वत्सतरार्णं च प्रगतादावृणे क्रमात् ।
ऋणार्णं प्रागृणोच्छित्त्यै यदृणं क्रियते परम् ।
वृद्धिः कलान्तरं प्रोक्तमथार्थस्य प्रयोजने ॥ ५ ॥
कुसिदं कुसितं वृद्धिजीविका चेति वृत्तयः ।
ग्राहकस्त्वधमर्णो दाय्युत्तमर्णः प्रयोजकः ॥ ७ ॥
वृद्ध्याजीवो द्वैगुणिको वार्द्धुषी च कुसीदिकः ।
भवेद्वार्द्धुषिकः सोऽथ स्त्री तादृक्स्यात्कुसीदिकी ॥ ८ ॥
दशैकादशिकस्तु स्यादेकादशकृते दश ।
यः प्रयच्छेल्लमक[126a]स्तु प्रतिभूर्ऋणमत्कुणः ॥ ९ ॥

---

6411 ऊरव्या ऊरुजा; विशः ६
6413 प्रमृतानृते ४
6414 उंछो १; शिलं १
6415 ऋतं १; °दयाचित १
6416 याचित २; वाणिज्य २
6417 सत्यानृत ३; MS. reads प्रामृत्यं for प्रामीत्यं
6419 कलापक १
6420 अश्वत्थकं १ यवबुसकं १ च ग्रैष्मिक १
6421 आवर समकं त्वृणमुक्तं corrupt
6422 संवत्सरकं २
6423 मासिकं १ वार्षिकं १ त्रिषु १
6424 प्रार्णं १ वत्सतरार्णं १ च प्रगताद°
6425 ऋणार्णं १
6426 कलांतरं २
6427 कुसिदं कुसितं वृद्धिजीविका ३
6428 ग्राहक १
6429 द्वैगुणीको
6430 °षिकः ५
6431 °दशिक १ स्तु

स्थेयः साक्षी विशेष्यघ्नः पुंस्याधिर्बन्धकः समौ ।
निमेयस्तु परावर्तो नैमेयो निमयोऽपि सः ॥ १० ॥
व्यतिहारः परावृत्तिः परिवर्तनमित्यपि ।
पुमान्विनिमयस्तत्रापमित्येत्यव्ययं मतम् ॥ ११ ॥
त्रिष्वापमित्यकं तत्स्याद्विनिवृत्तमपमित्य यत् ।
याचितेन तु निर्वृत्तमेवं याचितकं मतम् ॥ १२ ॥
क्षेत्राजीवः कार्षकः स्यात्कृषकश्च कृषीवलः ।
कर्षकः क्षेत्रि-हलिनौ कुटुम्बी च विशेष्यवत् ॥ १३ ॥
वापोऽहिर्वलयत्रय्यां वप्रं केदारमस्त्रियाम् ।
क्षेत्रं क्षैत्रं तु कैदार्यं कैदारिकमपि व्रजे ॥ १४ ॥
कैदारिकमकृष्टं तु खिलमप्रहतं त्रिषु ।
धान्यानां भवने क्षेत्रे
वक्ष्यमाणा विशेष्यगाः ॥ १५ ॥
द्विकाण्डा क्षेत्रभक्तिश्चेद्द्विकाण्डान्या विशेष्यवत् ।
तुल्ये ब्रैहेय-शालेये तथा तैलीन-तिल्यके ।
माषीण-माष्ये भाङ्गीन-भङ्ग्ये औमीनमुम्यवत् ॥ १६ ॥
[126b] अणव्यमाणवीनं च यव्यं स्याच्च यवस्य तत् ।
पृथग्यवक्यं षष्टिक्यं मौद्गीनं कौद्रवीणकम् ॥ १७ ॥
तस्मै हितेऽपि यव्यं स्यान्माष्यं तिल्यं च मेघवत् ।
बीजाकृतं वापितं स्यादुप्तकृष्टे हि यद्भवेत् ।
कृष्टं सीत्यं च हल्यं स्याद्विसीत्यं तु द्विहल्यवत् ॥ १८ ॥
द्विगुणाकृतं द्वितीयाकृतं च शम्बाकृतं च्चेदम् ।
त्रिगुणाकृतं तृतीयाकृतं त्रिहल्यं त्रिसीत्यमपि तस्मिन् ॥ १९ ॥

6433 विशेषघ्नः; °वंधक २
6434 नियमस्तु परावर्तो नैमयेति ममोपि स॰ corrupt
6436 °त्सव्ययं १०
6437 °मित्यकं १
6438 याचितकं १
6440 कुटुंबी ८
6441 वायोहिर्वलयत्रय्यां for prior half
6442 क्षेत्रे ६
6443 कैदारिक ४ मनूष्णं तु, °हतं २ त्रिषु ४
6444 क्षेत्रे
6445 द्विकाडा १
6447 °शालेये २; °तिल्यके २
6448 °माष्ये २; °भंग्ये २; °मुम्यरवत्
6449 °नीनं २ च यव्यं १
6450 °ग्यवक्यं १ षष्टिक्यं १ मौद्रानं १ कौद्र° वीणकं १
6451 हितेपि यव्यं १ स्यान्माष्यं १ तिल्यं १
6452 बाजाकृतं वापितं २
6453 सीतं च हल्यं ३
6454 शनाकृतं ५
6455 तृतीयाकृत°; त्रिसीत्य ४

प्रस्थद्रोणादिवापादौ प्रास्थिक-द्रौणिकादयः ।
खारीवापस्तु खारीको द्विखारीकादयस्तथा ॥ २० ॥
पात्रवापा पात्रिकी स्यात्रिषु बीजाकृतादयः ।
खलोऽस्त्री खलधानं स्याल्लोष्टोऽस्त्री लोष्टुरादिमे ॥ २१ ॥
लेष्टुः पुंसि दलिः स्त्री स्यात्स महोन्दरणीर्द्वयोः ।
न स्त्रियां हल-सीरौ स्तः कृन्तत्रं लाङ्गलं तथा ॥ २२ ॥
गोदारणं चाथ महद्धलं जित्या हलिर्द्वयोः ।
: अहलस्त्वहलिस्तुल्यौ सुहलः सुहलिः समौ ।
[127a] दुर्हलिर्दुर्हलस्त्वय्यां हल्या तु हलसंहतिः ।
हलिं गृह्णाति यस्तस्मिन्हलग्रस्स्याद्विशेष्यवत् ।
कुशी स्त्री फाल-कृपको निरीपं कुटकं फलम् ॥ २३ ॥
कुशिकश्च स्त्रियां त्वीषापीषो लाङ्गलदण्डकः ।
स्त्रियौ सीता च शीता च भवेल्लाङ्गलपद्धतिः ॥ २४ ॥
प्रतोदस्तु प्रवयणं प्राजनं तोत्र-तोदने ।
भेषणं चाथ कुद्दाल-कुद्दालौ गोविदारणम् ॥ २५ ॥
आखनिकाखनिकचकाखाखर आखान आखनोऽप्यासः ।
अवदारणं खनित्रं खात्रं क्लीबे च त्रिख्यातम् ॥ २६ ॥
दात्रस्य मुष्टौ वण्टः स्यादथ मत्यं समीकृतौ ।
कुशा च लाण्डी कथिता या भवेद्दारुनिर्मिता ।
* * * * * * * * * * * *
लविर्द्वयोः कोटिश-लोष्टभेदनौ ।
आबन्धमाहुर्नरि योत्र-योक्त्रे
शम्या स्त्रियां स्याद्युगकीलकश्च ।
खलं त्रिषु खलेवालं धान्यराशीकृतिस्थलम् ।

---

6456 प्रास्थिक १
6457 खारिवापस्तु खारिको १; द्विखारिकादय १ सथा
6458 पात्रकी १
6459 °धानं १
6460 दलिः ४
6461 सीरौ सर्वं for स्तः कृन्तत्रं
6462 गोदारणं ५
6463 अहलस्त्वहलौ २
6464 °ईहल १ यच्चां प्रे० क० १५
6465 हलवत् १
6467 कुशिक ३ ४, °षीषो for °पीषो
6469 = AC 893 ab. खानते for °खने
6470 भेषणं ६, °दालौ १
6472 खनित्र for °नित्रं
6473 वेद. ३; वेरे १
6474 लवी २
6476 लवी ४; °भेदनी २
6477 °योक्रे १
6479 °स्थले २

स्यात्खलायाहतं खल्यं कथितं मेचलिङ्गकम् ॥ २७ ॥
उकारश्च निकारश्च द्वौ धान्य [127b] क्षेपणार्थकौ ।
खलेवाली स्त्रियां द्वंद्वे मेथिर्मेधिरुभे मते ।
खले गोबन्धकाष्टेऽथ धान्यादिक्षेपणार्थके ॥ २७ ॥
काष्ठे पञ्चाङ्गुलं क्लीबे धान्यं सीत्यं च सस्तकम् ।
व्रीहिः स्तम्बकरी पुंसि व्रीहिस्त्वाशुश्च पाटलः ॥ २८ ॥
व्रीहिमान्व्रीहिको व्रीही शालिलः शालिकस्तथा ।
शाली च शालियुक्तेऽथ चरव्यश्चरवे हुतः ।
स राजभोजनो राज्ञा भुज्यते योऽन्यलिङ्गकः ।
शालयः कलमाद्याः स्युः कलमो ना कलामकः ।
लोहितो रक्तशालिः स्यान्महाशालिः सुगन्धिकः ॥ २९ ॥
जीर्णप्रकारशालिर्यो गदितः स च जीर्णकः ।
षष्टिको गर्भपाकी स्याद्व्रीहिभेदोऽस्त्रियामणुः ।
वनव्रीहिस्तु नीवारो यवस्तु शितशूककः ॥ ३० ॥
अश्वप्रियः प्रावटोऽथ तोक्मोऽसौ हरितो भवेत् ।
साक्तुकः सक्तुसाधुर्यो यव आपूपिकस्त्रिषु ॥ ३१ ॥
गोधूमचूर्णं समिता शुद्धा च कणिका स्त्रियः ।
गो[128a]धूम-सुमनौ तुल्यौ मूजम्बूस्त्र योषिति ॥ ३२ ॥
प्रियङ्गु-कङ्गु-कङ्गुन्यः कङ्गुः स्त्री पीततन्दुला ।
शोधिका सुराटी श्वेता साथ पीता तु माधवी ॥ ३३ ॥
लोहिता मधुका मा(सा?)तु सा कृष्णा विनिगद्यते ।
श्यामाकः श्यामकश्चाथ कोद्रवः कोरदूषकः ॥ ३४ ॥
उद्दालस्तु स वन्यः स्याद्यावनालस्तु जूर्णकः ।
युगंधरो योनलश्च योनालो बीजपुष्पकः ॥ ३५ ॥

---

6482 °मेंथिरुमे for °मेंधिरुमे
6484 पचागुले १
6485 स्तंबवरी ५, पाटलः २
6487 शाली २
6489 कलाचक २ for कलामक
6490 °शालि २, सुगंधिक २
6492 °मणु १
6493 नीवारः २
6494 प्रावरो ४ च तोक्मो १
6495 साक्तुक १; °पिक १
6496 कणिका ३
6497 यौषिति
6498 cf AC 1176 *cd* स्त्रीपीततंदुला ५
6499 सुराटी २; माधवी १
6500 मधुका १ मातु
6501 °दूषक २

देवधान्यं वर्वटी तु गवेधुः स्याद्विलिङ्गका ।
चीनकः काककङ्गुः स्यादथ स्युस्त्रिःफलीकृताः ॥ ३६ ॥
शालीविल्याद्रिषु शालीविलीयाः कलमादयः ।
आबर्हिमूला शाल्या स्यान्मूल्याः स्युर्मेधलिङ्गकाः ।
तन्दुलोऽवहतव्रीहिगर्भो मुद्गस्तु शारदः ॥ ३७ ॥
लोभ्यो बलाटः प्रथनो हरितस्तु हरिर्मतः ।
पीतेऽथ वसुखण्डीरः प्रवेलो जय इत्यपि ॥ ३८ ॥
कृष्णे प्रवर-वासन्त-हरिमन्थज-शिम्बिकाः ।
वन्ये खण्डी-तुवर[128b]क-निगूढक[क]कुलीनकाः ॥ ३९ ॥
आढकी तुवरी वर्णा राजमापस्तु वर्वटः ।
माषस्तु मदनो नन्दी वृष्यो बीजवरो बली ॥ ४० ॥
मसुरा च मसूरा च द्वंद्वे स्याद्वीहिकाञ्चनः ।
मङ्गल्यकश्चाथ समौ मकुष्टक-मयुष्टकौ ॥ ४१ ॥
राजमुद्गः कुलत्थस्तु कालवृन्तोऽभिधीयते ।
कुलत्थिका ताम्रवृन्ता कलायस्तु सतीनकः ॥ ४२ ॥
सातीनः खण्डिकश्च स्याद्धरेणुर्द्वयलिङ्गकः ।
त्रिपुटो वण्टकस्त्वेव वर्तुलो विनिगद्यते ॥ ४३ ॥
हरिमन्थस्तु चणको निष्पावः सितशिम्बिकः ।
वल्लश्चाथ तिलस्तैलफलपूतेऽथ जर्तिलः ॥ ४४ ॥
स वन्यस्तिलपेजस्तु तिलपिञ्जश्च निष्फलः ।
स एव कृष्णवर्णश्चेत्कृष्णको विनिगद्यते ॥ ४५ ॥
उमा क्षुमातसी चण्डी विकारे त्वौममौमकम् ।
त्रिषु तस्या अथो धूलौ स्यादुमाकटमन्तिमे ॥ ४६ ॥

---

6504 °धान्य ७; गवे धुः २
6505 चीनकः काककंगुः २
6506 °विलीयाः
6507 मूल्याः १
6508 तंदुलो १
6509 Cf. AC. 1172 *ab*. प्रथनो ५; हरि २
6510 Cf. AC. 1172 *cd*. जय ३
6511 =AC. 1173 *ab*. °शिंबिकाः ४
6512 °मकाः ५
6513 वर्वटः २
6514 =AC. 1171 *cd*. माषोस्तु; बली ६
6516 मंगल्यक ४
6517 राजमुद्गः ३; °हंतो २
6518 कुलस्थिका ताम्रंला ३
6520 त्रिपुटो ५
6521 वणको २
6522 वल्ल ३; °पूते १३ प जर्तिलः १
6523 °पिंज २ व निष्पलः
6524 कृष्णको १
6525 चंडी ४
6526 °कूट १

शणो भङ्गा मातुलानी रजस्त्व[129a]स्याखिलस्य च ।
भङ्गाकटं तिल्कटमथाश्वयुजकं भवेत् ॥ ४७ ॥
यदुच्यते पौर्णमास्यामाश्वयुज्यां विशेष्यवत् ।
तद्विकारे तिलमयं तथा यवमयं भवेत् ।
किंशारुः सस्यशूकोऽस्त्री शिलोऽस्त्री कणिशोऽपि च ॥ ४८ ॥
सस्यस्य मञ्जरी चाथ काण्डोऽस्त्री सस्यनाडिका ।
नाली नालं निफलस्तु पलालोऽस्त्री पलश्च सः ॥ ४९ ॥
स्याद्यावकस्तु कुल्मापः पुलाकस्तुच्छधान्यकम् ।
बुषं बुसं तु न स्त्रियां कडंगरः कडंकरः ।
कणस्तु सूक्ष्मतन्दुलस्तुषस्तु पुंसि तत्त्वचि ॥ ५० ॥
रिद्धमृद्धं चावसितं पूतं स्याद्बहुलीकृतम् ।
यन्निर्बुसीकृतं धान्यं कण्डितं त्वाहतं त्रिषु ॥ ५१ ॥
माषादयः शमीधान्यं शूकधान्यं यवादयः ।
नीवारवरकाद्यानि नृणां धान्यानि निर्द्दिशेत् ॥ ५२ ॥
ईतिः स्त्रियां धान्यविघ्ने धान्यसंघे तु सास्यकम् ।
वाटभङ्गस्तु शस्यानां नखेन ग्रहणं भवेत् ।
प्रस्फोटनं तु पवन[129b]मवघातस्तु कण्डनम् ।
अयोमं मुसलं न स्त्री मुशलं मुषलं··· ॥ ५३ ॥
अयोनिशूकिलोऽथास्याग्रे शम्बः कण्डनी पुनः ।
उलूखलोदूखले च ※ [शू]र्प-सूर्पे तु न स्त्रियाम् ॥ ५४ ॥
प्रास्फोटनं चालनी तु न ना तितउ न स्त्रियाम् ।
सूदशाला रसवती पाकस्थाने महानसम् ॥ ५५ ॥
पक्तिः पचा रन्धनं च पाकः पक्त्रिम-पाकिमे ।
निर्वृत्ते पाकतोऽथ स्यात्पक्ता ※ ※ च पाचकः ।

---

6527 मातुलानी २
6528 भंगाकूर्ट १ तिल्कट १; °युजं॰ १
6530 तिलमय १; °मयं १ भवेत् ३
6531 किंशारः १; °शूको २; कणिशो ३
6532 कांडो १
6533 नालं ३ निष्क°; पल २ श्व
6534 कुल्माष २ पुलाक १
6536 कण १ स्तु, °स्तुष १ स्तु
6537 चावसितं ३; °ह्रतं २
6538 स्याद्दतं १
6539 °धान्यं १ शुकधान्यं १
6540 नीचातरं for नीवार; धान्यानि १
6541 ईतिः १
6543=AC 1017ᶜᵈ पवनं २ मव°; कंडनं २
6544 after मुषलं, reads, गिरीया
6545 शंब ८
6546 °दूखले ३
6547 प्रास्फोटनं ३
6548 =AC. 998 *ab*. सूदशाला रसवती १
6549 °पाकिमे २

महानसे त्वधिकृते पौरोगव-पुरोगुकौ ।
सूदाध्यक्षश्च सूदास्तु पाकुका वल्लवा गुणाः ॥ ५६ ॥
भक्तकाराः सूपकाराः सौपिकारालिकावपि ।
भस्यपाणिः पचेलुश्चौदनिकान्धसिकावपि ॥ ५७ ॥
आ*[पू]पिकः कान्दविको भक्ष्यकार इमे त्रिषु ।
अथान्तिका चुल्लिरधिश्रयणी मूलकारिका ॥ ५८ ॥
उद्धानमश्मन्तमथाङ्गारधानी हसन्तिका ।
हसन्यङ्गारशकटी तथा साङ्गारपात्रिका ॥ ५९ ॥
भ्राष्ट्रमि[130a]न्धो भ्राष्ट्रमिन्धे यः स्वय मेचलिङ्गकः ।
भ्राष्ट्राम्बरीषौ न स्त्री स्तो ऋचीष स्यादृजीषवत् ।
न द्वयोः पिष्टपचनं भवेन्मास्पचन पुनः ॥ ६० ॥
मास्पाकपात्रं कन्दुस्तु द्वयोः स्यात्स्वेदनी स्त्रियाम् ।
पालिका स्यात्कुन्तलिका दध्यादिच्छेदिनी हि या ।
दर्विः कम्बिः खजाकाथ तर्दूर्ना दारुहस्तकः ॥ ६१ ॥
अलिञ्जरोऽस्त्री मणिके कटाहस्त्रिषु कर्परम् ।
कर्करी कर्करीका स्यादालुरालुर्गलन्तिका ॥ ६२ ॥
वार्द्धनी कारकोऽस्त्री स करङ्को नालिकेरजः ।
* * * * * * * * कुम्भी कुम्भीरुखा कुला ।
चरुर्ना पिठरस्त्वप्यां कलशः कलसस्त्रिषु ।
घटः कुम्भः करीरो ना न स्त्री कुट-निपावुभौ ।
घटः कुम्भश्च मिथुने करीरोऽस्त्री कुटो निपः ॥ ६४ ॥
पुटग्रीवश्च विष्कलः प्रघणस्ताम्रजो मतः ।
काचज. कटखादोऽथ कुनालो हण्डिकासुतः ॥ ६५ ॥
अयस्कुम्भः पयस्कुम्भोऽयस्पानीत्यादि तस्य चेत् ।

---

6551 °पुरोगुकौ १
6552 °ध्यक्षश्च ३
6554 °धसिका १२ वपि
6555 भक्ष्यकार ३
6557 °मश्मंत ७
6558 °पात्रिका ५
6560 भ्राचीषि for ऋचीषं
6561 °पचनं ३
6562 °पाक २ कंदस्तु, खेदनी २
6563 कुंतलिका २
6564 खजाका ३ थ तर्दूला दारु हस्तक ३
6565 कर्परं २
6567 वार्धानी करको ७, °केरज २
6569 पिठर ८, कलशस्त्रिषु
6570 निपावुभौ
6573 °सुत. ३

शरावोऽस्त्री वर्द्धमानः [130b] शालाजिरक-पार्थिवौ ।
मृत्कांस्यं चाथ मन्थन्यां गर्गरी कलशी समे ॥ ६६ ॥
नेत्रं मथिगुणो न स्त्री मन्थनं तु विलोडनम् ।
वैशाखः खजको मन्थो मन्थास्तकाट इत्यपि ।
माथः क्षुब्धोऽस्य विष्कम्भो मञ्जीरः कुटकोऽपि सः ॥ ६७ ॥
दण्डमाथं धावति यो भैषवद्दाण्डमाथिकः ।
श्रेणिर्द्वयोः कंशमयं स्थलं स्वशतभाजनम् ॥ ६७ ॥
मल्लिका कोशिका पारी कंसस्तु चपकोऽस्त्रियाम् ।
स्यात्पानभाजनं न स्त्री पिधानं स्यादुदञ्चनम् ॥ ६८ ॥
कुतूः कृत्वेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान् ।
कृता सर्वा चर्मणा सा सार्वचर्मीणकोच्यते ॥ ६९ ॥
भैषवत्सर्वचर्मीणं दृतिर्भस्त्रा च खल्वकः ।
प्रसेवकः पुमानत्र द्वयोश्चर्मप्रसेविका ।
मृते दृत्यां कलस्यां च दार्तेयं कालशेयवत् ।
चर्मणो जलपात्रे स्यादाढ्यः करकपात्रिका ॥ ७० ॥
सर्वमावपनं भाण्डं पात्रं तु त्रिपु भाजनम् ।
अमत्रं सु[131a]ज्युराघेऽथ स्थालं तच्च महीयसि ॥ ७१ ॥
प्रस्थंपचं प्रास्थिकं च द्रौणं द्रौणिकमित्यपि ।
द्रोणपाचि स्यादथाढकीनमाढकिकं तथा ॥ ७२ ॥
आचितीनं त्वाचितिकं पात्रीणं पात्रिकं तथा ।
सर्वपात्रव्यापकं यत्सर्वपात्रीणमुच्यते ।
प्रस्थंपचादित्रितये देहयात्रा तु भोजनम् ।
जक्षणं भक्षणं प्रत्यवसानं जेमनादने ॥ ७२ ॥
स्वदनं खादनं प्सानं विप्वाणं कल्पनं च तत् ।

6574 अयस्कंभः पयस्कुंभो १ यरपात्री १
6575 शाल्वो° for शरावो°
6576 मृत्कांस्यं ५; कलशी ३
6578 मंथाश्वकाट
6579 Cf. AC. 1023 *cd.* क्षुब्धोऽस्य; कुटकौपिनः
6580 धावविया for धावति यो; °माथि कः
6581 श्रेणि १ द्वंधो कंशमयं स्थलं १
6582 मल्लिका पौलिका; कंसस्त्वचपकोऽस्त्रीयो for post. half
6583 °दुदंचनम् २
6584 कुतूः १ कृत्वेः; कुतपः for कुतुपः
6585 °णको १ च्यते
6586 °चर्मीण २ दृतिर्भ°
6587 °प्रसेविका ५
6588 °शेय १ वत्
6589 °पात्रिका २
6592 प्रास्थिक २ छ !; द्रौणिक २
6593 °ढकिकं २

अवम्यानाशने न्यादो निघसोऽभ्यवहारवत् ॥ ७३ ॥
वल्भ आंहारलेह्य च घसि-जग्धी स्त्रियौ न्यदः ॥
ईषद्भुतादियुक्तेऽस्मिन्नन्यं स्याद्भुतमति ।
चर्वणं चूर्णनं दन्तैर्जिह्वास्वादस्तु लेहनम् ॥ ७४ ॥
कल्यवर्तः प्रातराशः सग्धिः स्त्री सहभोजनम् ।
संपीतिस्तुल्यपानं स्यादथ ग्रासो गुडेरकः ॥ ७५ ॥
गुडः पिण्डो गडोलश्च गण्डोलः कवकोऽपि सः ।
कवलोऽस्त्री स्वयं त्वेष वद्धः सिन उदीर्यते ।
स्वास्तितोऽन्यस्तर्पणं तु तृप्तिः सौहित्यमित्य[131b]पि ॥ ७६ ॥
आघ्राणालेपने स्त्री तु फेला-पिण्डोलि-फेलयः ।
गण्डोलश्चोच्चमुच्छिष्टं तथा कवटमस्त्रियाम् ॥ ७७ ॥
उच्छिष्टमिन्नो भुक्तावशेषो विघस ईरितः ।
शोषणं तु रसादानं पीतिः स्त्री पान-पानके ॥ ७८ ॥
पेयं लेह्यं च चोष्यं च भक्ष्यं चेति पृथक्त्रिषु ।
काञ्जिकं * * * शुक्तं धान्याम्लं च तुषोदकम् ॥ ७९ ॥
आरनालक-सौवीर-कुल्माषाभिषुतानि च ।
अवन्तिसोममुन्नाहं सुवीराम्लं च कुञ्जलम् ॥ ८० ॥
महारसं कुण्डगोलं गृहाम्भो धातुनाशनम् ।
चुक्रं रक्षोघ्नकं चाथ स्नेहे स्नेनं तु न स्त्रियाम् ॥ ८१ ॥
म्रक्षणाभ्यञ्जने वस्तु कटुतैलं तु सार्षपम् ।
न स्त्रियौ खल-पिण्याकौ खलि-पिण्ड्यौ स्त्रियावुभे ।
इक्षो रसस्य समलऽन्यंशोर्ध्वाद्विमलामलाः ॥ ८२ ॥
विकाराः फाणित-गुड-मत्स्यण्डी-खण्ड-शर्कराः ।
गुड इक्षुरसक्वाथो मत्स्यण्डी पलिकापि सा ॥ ८३ ॥

6594 स्वास्तितीकं २
6598 विष्कारं for विचार्ण
6600 वल्म for वल्भ
6602 =AC. 424 *cd*. चर्वणे १
6603 =var. AC. 425 *ab*. स्नग्धिः for सग्धिः; °भोजनं २
6604 °पानं २; °दस्थामासो for °दथ ग्रासो
6608 °लेपने ५; °पेल्या for °फेलय°
6611 रसारानं २; °पानके ३
6612 पेयं १ लेयं १ न चोष्यं १ च भक्ष्यं १ चेति
6613 मुक्ताश°,
6614 °कुल्माषा°
6617 रक्षोघ्नकं १६
6616 म्रक्षणाभ्यंजने ४
6621 फाणित १ गुड १ मत्स्यंडी १ खंड १, शर्कराः १
6622 °क्वाथो १

मीनाण्डी मधुधूलिस्तु खण्डः स्यात्पिण्डश[ 132a ]र्करा ।
शर्करा सिकता श्वेताहिच्छत्रा च सितोपला ॥ ८४ ॥
मधुरा सा माधवी सा पद्मा यस्तु चार्करा ।
स्यादासशर्करा पुष्पासवस्तु मधु न स्त्रियाम् ॥ ८५ ॥
माक्षिकं मक्षिकाविट्च सारघं तैलवद्धि यत् ।
क्षौद्रं तु तत्कपिलाभं स्यात्पौत्तिकं घृतसंनिभम् ॥ ८६ ॥
भ्रामरं श्वेतवर्णं स्याच्चतस्रो मधुजातयः ।
मधूच्छिष्टं तु मयणं सिक्थं चात्र नपुंसके ।
आर्घ्यं छात्रं तथौद्दालं मधुभेदाः परेऽपि च ॥ ८७ ॥
रसाला स्याच्छिखरिणी रोमाली मार्जितापि सा ।
गुडाम्लिकादिसंयुक्तं पानकं सलिलादिकम् ॥ ८८ ॥
रागस्तु पानकं स्वादु पट्वम्लरससंयुतम् ।
मरिचाद्यन्वितो रागः खाडवो विनिगद्यते ॥ ८९ ॥
मधुखर्जूरमृद्वीकापरूपकसिताम्भसा ।
कृतं यत्पानकं रुच्यं पञ्चसारं तदुच्यते ॥ ९० ॥
कूर्चिका कुर्चिका क्षीरविकारोऽथ पयो यदि ॥ ९१ ॥
[ 132b ] गदिता दधिकूर्चीका पक्वं दध्ना समन्वितम् ।
तक्रेण तक्रकूर्चीका क्षीरशाकस्त्वपाकतः ।
क्षीरदध्नोर्हि यो भागः पृथग्भूतघनद्रवः ।
किलाटो मिथुने क्षीरदध्नोर्यो घनभागकः ॥ ९३ ॥
द्रवभागो मोरणो यत्रिषु.भारूटकाव्रधः (?) ।
औल्यं तूखासंस्कृतं यद्दाधिकं दधि संस्कृतम् ॥ ९४ ॥
क्षीरे क्षैरेयमौदश्वित्कमौदश्वितमित्यपि ।
एवं सार्पिष्क-कौलत्थ-दकलावणिकादयः ॥ ९५ ॥

---

6623 मीनाडी ४; °शर्करा ३
6624 सितोपला ६
6625 मधुराता माधवी १सा for prior half
6626 °शर्करा १
6627 सारघं ३
6628 क्षौद्रं १; पौतिकं १
6630 Before the line reads अपि-शब्दादमिश्रा च सिक्थं ३
6631 छात्रं १; मधुमेदाः for मधु°.
6632 मार्जिता ५
6633 पानकं १
6638 दूर्चिका कूर्चिका २
6639 °कूर्चीका १
6640 °कूर्चीका १ क्षीरशाक १
6642 किलाटी १
6643 मोरणो १
6644 औल्यं १
6645 क्षैरेय १; °श्वित २
6646 सार्पिष्क १ कौलत्य १

स्याचूर्णि चूर्णसंसृष्टं मौद्गं मुद्गैः समन्वितम् ।
प्रणीतमुपसंपन्नं प्रयस्तं तु सुसंस्कृतम् ॥ ९६ ॥
पक्वं राद्धं च संसिद्धं भृष्टं पक्वं विनाम्बुना ।
स्यात्पिच्छिलं विजिविलं विजिलं विज्जलं च तत् ॥ ९७ ॥
पूतं स्याद्गलितं स्निग्धं मसृणं चिक्कणं समम् ।
अम्लीकृतं त्वासुतं स्यान्मांसे शूलेन पाचितम् ॥ ९८ ॥
शूल्यं शूलाकृतं भारूटकं भूतिश्च मृष्टकः ॥ ९९ ॥

मक्तौदनोन्धोमसरारनाल-
[133a]प्रसादनाह्वानि च जीवनं च ।
याजं च वाजं कुरुरोदनोऽस्त्री
कूराशने दीदिवि चात्र भिस्सा ॥ १०० ॥

त्रिप्वाशितंभवो येन भवेदतिथिराशितः ।
भिस्सटा-दग्धिकेऽथास्मिन्स यवेनाद्य-यावकौ ॥ १ ॥
तिलतन्दुलमाषाश्च कृशरा-त्रिसरे स्त्रियौ ।
भूतौदनो दधिनिशा,सत्तुलाजतिलान्वितः ॥ २ ॥
मण्डः सर्वरसाग्रेऽस्त्री तस्मिन्नोदनसंभवे ।
मासराचाम-निस्रावा सिक्थः पुंसि पुलाकवत् ॥ ३ ॥
पार्परोऽस्त्री स्त्रियां तु स्यात्पेयाल्पतरसिक्थका ।
यवागूरुष्णिका किंचित्सिक्थोष्णा सा नखंपचा ॥ ४ ॥
श्राणा विलेपी तरला यवागूर्घनसिक्थका ।
गारित्रं लड्डुकः पुंसि मोदकोऽस्त्री च संगतः ।
एलाकर्पूरमरिचकयुक्तोऽसौ सिंहकेसरः ॥ ५ ॥

---

6647 स्याचूर्णि १; मौद्गं १
6648 =var. AK. 1797 °संपन्नं २ प्रयस्तं १
6649 संसिद्धं ३ मृष्टं १
6650 विज्जलं ४
6651 °द्गलितं २; चिक्कणं ३
6653 शूलाकृतं २ भारूटकं; मृष्टको
6654 भक्तं च जौधो
6657 दिदीवि for दीदिवि
6658 °तभनो १
6659 °दग्धिके २; यवेनाद्ययावकौ २
6660 तिल– for तिल–; °माषश्च; °त्रिसरे २
6661 भूतौदनो १; सतूलाज°
6663 °निस्रावा १
6664 पार्परो १; पेया १
6665 °ल्पिसक्थ २; नखंपचा
6666 विलेपितरला १.—After यवागू, adds मारणं शूले इति मालः तरल-यवागूस्तरः ॥
6667 लड्डुकः, मोदको २
6668 °युक्तोऽसौ

पूपोऽपूपः पिष्टकश्च मण्डकोऽसौ गुडादियुक् ।
स्यात्संयावः पूलिका तु पोलिका[133b]पोलि-पूपिकाः ॥ ६ ॥
पूपस्यथेपरपकासावम्पूपोऽभ्योप आदिमे ।
पौलिः स्त्रियां पूरणं तु सगुडस्विन्नपिष्टकम् ॥ ७ ॥
पिष्टपूरो घृतवरो घृतपूरश्च घार्त्तिका ।
चमसि [ पिष्टवर्ति स्यात् ] * * * * * ॥ ८ ॥
आपूपिकं शाष्कुलिकं तद्गणे तु नपुंसकम् ।
तस्मै हितमपूपीयमपूप्यं च विशेष्यवत् ॥ ९ ॥
नियुक्तं दीयते श्राणा यस्यै सा श्राणिकी तथा ।
स्यान्मांसोदनिकी भाक्ती भाक्तिकी च विशेष्यगाः ॥ १० ॥
स्याच्चेमनं च निष्ठानं वटकस्त्ववसेकिमः ।
शाण्डाकी कन्दमूलादिमुद्गादिवटकैः कृताः ॥ ११ ॥
पायसं परमान्नं स्यात्प्रहितं त्ववरान्नकम् ।
सूदः सूपः कूलकोऽस्त्री बुस्तं मांसजलं रसः ॥ ९ ॥
यूर्नी रसो यूषमस्त्री पक्वमुद्गादिजे जले ।
खलः पक्वैर्मूलफलैरथ काम्बलिको भवेत् ।
समांसकट्वम्लयुतो रसाद्यास्त्वच्छताः कृताः ॥ १० ॥
कटुक्षारस्नेहहीना[134a]हीनाश्च क्रमतो मताः ।
यवचूर्णं चिक्कसोऽस्त्री धाना भृष्टयवे स्त्रियः ।
धानाचूर्णं सक्तवः स्युर्मन्थयस्त्री मस्तुरादिमे ।
ते द्रवाः खोडिता मन्थोऽथोदमन्थो जलप्लुताः ॥ १२ ॥
दध्नाप्लुतः करम्भोऽस्त्री त्वक्षताः पुंसि भूम्नि ॥ १३ ॥

---

6669 मंडको ४
6670 सयावः १
6671 पूपल्य ५
6672 पूरणं १
6673 घृतबरो धृतफरश्च
6674 चमसी चमस पिष्टवर्ति स्यादिति गौड.
6675 आपूपिकं १ शाष्कुलिक १
6676 °मपूप्यं २
6678 °दनिकी १; भाचिकी २
6679 निष्टानं २
6680 शाण्डाकी १
6681 परमान्नं २
6682 Before सूदः adds सूप ; कूलको ५; लौहुल २ मस्त्री for बुस्तं; रसः १
6683 रगो for रसो
6684 कावलिको १
6685 स मासयद्वम्ल°; °त्स्वक्ता· १
6687 यवचर्णं चिक्कसो १ स्त्री धानो
6689 खोडितामथ १ थोदमंथो १.
6690 करंभो १ स्त्री

लाजा भृष्टि द्वयोर्भृष्टः शलिखादिक उद्धसः ।
भृष्टार्द्रशूकधान्ये स्यात्पृथुकश्चिपिटः समौ ॥ १४ ॥
उलुम्बकस्तु गोधूमो भृष्टो योऽथोलको भवेत् ।
भृष्टाः शिम्ब्या (?) व्यञ्जनं तु घृतप्रभृति कथ्यते ॥ १५ ॥
गव्यं त्रिषु गवां सर्वं पयस्यं तु पयोभवम् ।
अस्त्री क्षीरपयः सूर्म सोमजोधस्यनामकम् ॥ १६ ॥
स्तन्यं पुंसवनं दुग्धं गोरसोऽभिनवं तु तत् ।
पेयुषोऽस्त्री स सप्ताहान्मोरणो मोलिकश्च सः ॥ १७ ॥
शार्कको दुग्धतालीयं दुग्धफेनश्च संमतः ।
शृतं पके घृतक्षीरे शीन तु स्त्यानमित्यपि ।
उष्णीकृतं विलीनं स्याद्भृतं स्त्यानाद्द्वयोऽन्यवत् ।
गोरसो दधिदुग्धोत्थं द्रप्सं स्यात्[134b]घलं दधि ।
अजातं दधि मन्दं स्यान्मस्त्वस्त्रे दधिमण्डकः ।
दध्युत्तरो दधिसरो दध्यग्र्यः कद्वरोऽपि सः ।
दधिस्नेहो घृतं त्वस्त्री हविः सर्पिर्हविष्यवत् ॥ १९ ॥
आधार आज्यं खजपमुशिरस्तामरमित्यपि ।
हैयंगवीनं तु नवं तक्रं त्वस्त्री च कट्वरः ॥ २० ॥
दधिसारः शरोत्थं चाथार्धाम्बूदश्विदन्तिमे ।
निर्जलं मथितं घोलो गोरसोऽरिष्टमित्यपि ॥ २१ ॥
दण्डाहतं कालशेयं भवेच्छ्वेतरसं तु तत् ।
द्विगुणाम्भोऽथ कामं स्यात्प्रकामं च निकामवत् ॥ २२ ॥
पर्याप्तमुपसंपन्नमिष्टं क्लीबे यथेप्सितम् ।
सर्पिर्मज्जा वसा तैलमिति स्नेहचतुष्टयी ।
द्वाभ्यां तु यमकस्ताभ्यां त्रिभिस्त्रिवृत्तनामकः ।

---

6691 भृष्टि
6693 उलुंछक१स्तु, यो घोलको १
6694 शिव्या
6695 गव्यं १ त्रिषु गर्वा, पयस्यं १
6696 मस्त्री for अस्त्री. °भरौपम्य°
6697 गोरसो २
6698 पेयुषो १ स्व स, मोलिरश्च
6699 °फेन १ स
6700 शृते १, शीर्ण for शीनं; स्त्यान २
6702 दृप्सस्यात्त्वर्तं २
6703 मंदं १ स्यान्मस्त्वं १ स्रे
6704 रः ध्यग्र्यः
6705 °तामर २
6707 °गवीनं १; कट्टरः
6708 °ग्धारदारोर्थे ४; °दश्वि १
6709 मथितं १
6710 कालशैयं ५; °रसं १
6712 यथेप्सितं १
6713 सर्पि १ मंज्जा १ वसा १ तैल १
6714 यमकं १ स्ताभ्यां; °त्रिवृत १

महांश्चतुर्भिरुदितो वैद्यशास्त्रविचक्षणैः ।
स्नेहमात्रोत्तमानघा प्राग्भक्तात्स्यावपीडकः ।
पाशुपाल्यं जीववृत्तिर्गोमान्गोमी गवीश्वरः ॥ २३ ॥
स्याद्गौसहस्त्रिको यः स्या[135a]द्गोसहस्रसमन्वितः ।
गोप-गोपाल-गोसंख्य-गोधुगाभीर-वल्लवाः ॥ २४ ॥
गोविन्दोऽधिकृतो गोषु स तु पञ्चगवस्वकः ।
यस्य स्वं पञ्च गावः स्युर्गच्छति त्वनु गुह्यतः ॥ २५ ॥
योऽसावनुगवीनः स्यादागवीनस्तु कर्मकृत् ।
गोः प्रत्यर्पणपर्यन्तं त्रिषु स्युर्गोमिदा( ना ? )दयः ॥ २६ ॥
गोमहिष्यादिकं पादबन्धनं पादबन्धनम् ।
गोधनं गोकुलं पुंसि व्रजश्च विनिगद्यते ॥ २७ ॥
वृषः ककुद्मानृषभोऽप्यनड्वान्
स्याद्वाडवेयो वृषभश्च भद्रः ।
गौः सौरभेयो वहतुश्च धाको-
ऽप्युक्षा बलीवर्द इहापि शक्वा ॥ २८ ॥
प्रोढः सधिः शाकर-शांकरौ च
महोक्षनामोक्षतरः स उक्तः ।
वृद्धोक्ष उक्तोऽतिजरद्गवोऽथ
जातोक्षसंज्ञः स च जात उक्षा ॥ २९ ॥
स्कन्धवाही स्कान्धिकः स्यादार्षभ्यः षण्ढतोचितः ।
इट्चरो गोपतिः षण्ढो गोवृषो मदकोहलः ।
स्यात्कूलमुद्रुजोऽनड्वान्यो दसः कूलमुद्रुजन् ।
शकृत्करिस्तु वत्सः[ 135b ]स्याद्दम्य-वत्सतरौ समौ ॥ ३० ॥
सद्योजातस्तर्णकोऽसौ द्विदन्षोडन्द्विषड्दौ ॥ ३१ ॥

---

6715 महा १ श्चतु°
6716 मनग्रा; °पीडकः १
6717 =AC. 888*cd*. °वृत्तिः . २; गेमी गवीधरः २
6718 सहस्त्रि ( repeated ) को १
6719 cf. AC. 889*ab* °वल्वाः ६
6720 गोविंदो १; °वसकः १
6721 °गुह्यतः ६
6722 °गवीनः १; °गवीन १ स्तु
6724 पादबं१धनं
6725 व्रज ३ च
6731 °तरः ३
6732 °द्रवो २
6733 जानोक्ष १
6734 स्कांधिकः २ स्यादार्षभ्यः १
6735 महवो°
6736 ऽनेड्वान्यो; कुल्मु°
6737 वत्सः २; °तरौ २
6738 सद्यौ°; तर्षकौ २; द्विदन् १

शृङ्गवाञ्शृङ्गिणः शृङ्गी कूटो भग्नविषाणकः ।
काले त्वजातशृङ्गोऽसौ तूवरः समुदीरितः ॥ ३२ ॥
नस्योतो नस्तितो नाथ हरिर्नस्यां वहन्नसि,।
स्यात्कूलमुद्वहः कूलं
पष्ठवाड्युगपार्श्वगः ॥ ३३ ॥
यहंलिहश्च प्रासङ्ग्यः शाकटस्तद्वहः पृथक् ।
तद्वोढा तेन खनतीत्यादौ हालिक-सैरिकौ ॥ ३४ ॥
धुर्यो धुरीणो धौरेयो धूर्वहश्च धुरंधरः ।
उभावेकधुरीणैकधुरावेकधुरावहे ॥ ३५ ॥
गलिः शक्तोऽप्यधूर्वोढा त्रिषु स्युः स्कान्धिकादयः ।
औक्षकं तूक्षवृन्देऽन्त्येऽथोक्ष्णः स्यादिदमादिषु ।
औक्षमौक्ष्णं त्वपत्येऽस्य गव्या गोत्रे गवां व्रजे ॥ ३६ ॥
धेनूनां धैनुकं वृन्दे वत्सानां वात्सकं गणे ।
आधेनवं त्वधेनूनां स्याद्धेन्वनडुहं पुनः ॥ ३७ ॥
धेनोर्वृषस्य च[ 136a ]द्वंद्वे स्कन्धस्त्वस्य वहः स्मृतः ।
ककुदं कुकुदं न स्त्री यद्वृषस्यांसकूटकम् ॥ ३८ ॥
नैचिकं तु शिरोऽथास्त्री शृङ्गं स्यात्कूणिका स्त्रियाम् ।
विषाणी च विषाणा च स्नत एव त्रिलिङ्गभाक् ॥ ३९ ॥
नाथस्तु नासारज्जुर्या सास्ना तु गलकम्बलः ।
गौरुस्राघ्न्याप्यनडुाही माता माहानडुह्यपि ॥ ४० ॥
सौरभेयी च माहेयी तम्पा तम्बा निलिम्पिका ।
उषा शृङ्गिण्यर्जुनी च रोहिणी सुरभिश्च सा ॥ ४१ ॥
नैचिकी तूत्तमा गोषु सैव स्याद्रोमतङ्किका ।
वर्णादिभेदात्संज्ञाः स्युः शबलीधवलादयः ॥ ४२ ॥

---

6739 शृंगी ३; °णकः १
6740 समसुदी°
6741 नस्तितो १; वह २ नसि
6742 सुद्वहः १
6743 °पार्श्वगः २
6744 °लिह् १ थ प्रासंग्यः १ णकट १
6745 हालिक १ सैरिकं १
6746 धुरंधरः ५
6747 °धुरा २ वेक°
6748 गलिः १
6749 औक्षकं १
6750 औक्ष १
6751 धैनुकं १; वात्सकं १
6752 आधेनवं १; °डुहं १
6753 वहः १
6754 कुकुर्द २
6755 नैचिक १
6757 °कंबलः २
6758 °घ्न्या°; °डुा°
6760 सुरभी १ श्च
6761 °ङ्किा २
6762 शबली १ धवला १ दयः

वशा वन्ध्यावतोका तु स्रवद्गर्भाथ संधिनी ।
आक्रान्ता वृषभेणाथ वेहद्या हि वृषोपगा ॥ ४३ ॥
गर्भोपघातिनी चाथ प्रष्ठौही यास्ति गर्भिणी ।
असिक्नी च पलिक्नी च या गौः स्याद्बालगर्भिणी ।
काल्योपसर्या प्रजने धेनुः स्यान्नवसूतिका ॥ ४४ ॥
धेनुंभव्या भविष्यन्ती धेनुर्या सुव्रता पुनः ।
सुखदो[136b]ह्याथ करटा यातिदुःखेन दुह्यते ॥ ४५ ॥
सुकरा स्यादचण्डी सा परेष्टुर्बहुसूतिका ।
गृष्टिः सकृत्प्रसूता या बहुदुग्धा तु वञ्जुला ॥ ४६ ॥
प्रौढवत्सा वष्कयिणी पीनोध्नी पीवरस्तनी ।
अल्पूध्नी वन्दितोध्नी स्याद्यूध्नी तु द्विगुणस्तनी ॥ ४७ ॥
द्रोणक्षीरा द्रोणदुग्धा धेनुष्या पीतदुग्धका ।
उत्तमर्णगृहे यावदृणमुक्ति स्थिता हि या ॥ ४८ ॥
अचक्षीना तु सा गौः स्याद्याचक्षो वा विजायते ।
सुपुच्छी तु सुपुच्छा स्याच्चित्रपुच्छा तु सा भवेत् ।
नित्यं कम्बरपुच्छ्येव व्याघ्रपुच्छी तु तादृशी ।
समांसमीना प्रत्यब्दं या सूतेऽमी तु मेघवत् ॥ ४९ ॥
गवां मले गोमयोऽस्त्री भूमिलेपनमित्यपि ।
सादो गोग्रन्थिरुपलोत्पले न स्त्री करीषवत् ।
पिष्टकं छगणं छाणं शुष्के गोमूत्र-गोजले ।
आपीनोऽस्त्री क्लीबमूधः कीलः पुष्पलकः शिवः ।
तिष्ठद्गु त्वव्ययं दोहसमयः क[137a]थितो गवाम् ।
स्यादायतीगवं तद्वद्यत्रागच्छन्ति धेनवः ॥ ५० ॥
दारागवोः पुनर्द्वंद्वे क्लीबे दारगवं भवेत् ।
नपुंसि दाम * * * * * * * समन्विता ।

6763 वध्या २, °द्गर्भा २ य सधिनी १
6766 °पलिक्नी २
6767 °सर्या २; धेनु १, °सूतिका २
6768 °भव्या १
6769 °दोह्या २
6770 दचण्डी २; परेष्टु १
6771 गृष्टि° १; वञ्जुळा २
6772 °यिणी २, °स्तनी २
6773 °घ्नी १
6774 °दुग्धा २
6776 °क्षीना १
6777 सुपुच्छा २
6778 °पुच्छ्ये १ प
6779 °मीना १
6782 °गोजले २
6783 °मूध २, शिव ३
6785 °तीगवं १
6786 °गव १

